श्रीविजयनेमिसूरिग्रन्थमाला-रत्नम् १२।

कुमारपालभूपालमौलिलालिताङ्घ्रिकमलयमल-कलिकालसर्वज्ञ-

श्रीहेमचन्द्राचार्यविरचितं

# धातुपारायणम्।

प्राचीनटिप्पनिकायुतं मुनिदक्षविजयसंयोजित-त्रुटितटिप्पनिकानुसन्धानादिविभूषितं च।

तथा-

व्याकरणवाचस्पति-कविरत्न-शास्त्रविशारद-श्रीमद्विजयलावण्यसूरीश्वर-शिष्यमुनि-दक्षविजयविरचित'कण्ड्वादिप्रकाश'युक्ताः

# कण्ड्वादयः।



सम्पादक —

स्याद्यन्तरत्नाकरादिप्रणेता मुनिदक्षविजयः।

SALWO
11FM

प्रकाशयित्री—

'श्रीऋषभदेवजी महाराजनी पेढी'

नाम्नी श्रीजगडियातीर्थस्था संस्था।

प्रतयः ५५१ ] मूल्यं सदुपयोगः [प्रथमावृत्तिः

वीर सं. २४६६। विक्रम सं. १९९६। ईस्वीसन् १९४०

# ॥ सेट् अनिट् कारिकाः ॥

श्रिश्विडीशीयुरुक्ष्णु-स्नुनुक्ष्णुश्च वृङो वृञः ।
ऊदृदन्तयुजादिभ्यः स्वरान्ता धातवः परे ॥ १ ॥

पाठे एकस्वराः स्युर्ये,-ऽनुस्वारेत इमे स्मृताः ।
द्विविधोऽपि शकिश्चायं, पचिर्विचिरिचो वचिः ॥ २ ॥

सिञ्चतिर्मुचिरतोऽपि पृच्छति-भ्रस्जिमस्जिभुजयो युजिर्यजि ।
त्यजिरञ्जिसञ्जयो निजिविजिर्भञ्जिमञ्जिभजश्च सृजिस्त्यजी ॥ ३ ॥

स्कन्दिर्विद्यविदिर्लविन्तयो नुदिः स्विद्यति शदिसदी भिदिच्छिदी ।
तुदी पदिहदी खिदिक्षुदी राधिसाधिशुधयो युधिव्यधी ॥ ४ ॥

बन्धबुध्यरुधयः क्रुधिक्षुधी सिध्यतिस्त्वथ हन्तिमन्यती ।
आपिना तपिशपिक्षिपिच्छुपो लुम्पतिः सृपिलिपी वपिस्वपी ॥ ५ ॥

यभिरभिलभियभिरमिनमिगमयः
क्रुशिलिशिरुशिरिशिदिशिदृशिस्पृशयः ।
मृशिमृशतिविशतिदंशिश्लिष्लुकुषयस्त्विषि
पिषिविष्लृशुषितुषिदुषिपुषयः ॥ ६ ॥

शिष्यतिर्घसिरतो वसिवसती रोहतिर्दुहिदिही अनिड्गदितौ ।
देग्धिदोग्धिलिहयो मिहिवहती नह्यतिर्दहतिरस्त्वमनिटः ॥ ७ ॥

॥ ॐ अर्हं नमः ॥

# अथ प्रास्ताविकं किञ्चित्



अयि निरवद्यहृद्यगद्यपद्यविद्योद्यानयानरसिका ! सुमनसः ! अलङ्क्रियतां कोमलकरकङ्कणममुना धातुपारायणग्रन्थरत्नेन ।

**धातुपारायणस्यान्वर्थता—**

किमिह निरूपणीयमिति जिज्ञासा त्वन्वर्थनाम्नैवोपशाम्यति । तथाहि-अस्मिन् ग्रन्थनाम्नि शब्दयुगलं वर्तते, 'धातु' इति 'पारायण' इति च, तत्र दधति क्रियार्थत्वमिति धातवः, साध्यत्वविशिष्टक्रियावाचका भ्वादिगणपठिता भूप्रभृतयः शब्दा इत्यर्थः । पारमयतेऽनेनेति पारायणम्, साकल्येन वचनमित्यर्थः । धातूनां निरुक्तस्वरूपाणां पारायणं साकल्येन वचनं धातुपारायणम् । सकलधातुप्रतिपादको ग्रन्थ इत्यर्थः । तथा चेह निखिला धातवो निरूपणीया इति सिद्धम् ॥

**प्रकृतग्रन्थस्य सकलव्यवहारनिर्वाहः प्रयोजनम्—**

ननु 'प्रयोजनमन्तरेण मन्दोऽपि न प्रवर्त्तते' इति प्रेक्षावतां प्रवृत्तिकृते प्रकृतग्रन्थस्य प्रयोजनं प्रकटनीयमिति चेद्? उच्यते-सकलव्यवहारासाधारणं कारणं भाषैव । न हि भाषामन्तरेण लोके कोऽपि व्यवहारमार्गो निर्वहति, यदुक्तं हरिणा-

" अर्थप्रवृत्तितत्त्वानां, शब्दा एव निबन्धनम्
तत्त्वावबोधः शब्दानां, नास्ति व्याकरणादृते ॥ १३ ॥
इति कर्त्तव्यता लोके, सर्वा शब्दव्यपाश्रया ।
यां पूर्वाहितसंस्कारो, बालोऽपि प्रतिपद्यते ॥ १२१ ॥ "

इति वाक्यपदीये ॥

सा च भाषा वचनव्यापाररूपा, वचनव्यापारश्च वाक्यादिघटित एव, वाक्यमपि क्रियापदघटितमेव । यदुक्तम् "सविशेषणमाख्यातं वाक्यम्" (१. १. २६) इति क्रियापदान्यपि धातुघटितान्येव, धातवश्चानेन बोधिता भवन्तीति प्रकृतग्रन्थस्य सकलव्यवहारनिर्वाहः प्रयोजनम् ।

## क्रियापदानां तदतिरिक्तशब्दानां च धातुमूलकता—

किञ्च वाक्ये क्रियापदभिन्ना ये शब्दास्तेऽपि धातुमूला एव, यदुक्तम्- "**शब्दयोनिश्च धातवः**" तथा-" **सर्वं नाम धातुजमाह शकटस्य च तोकम्** " इति भाष्यम् ;

> " **नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम् ।**
> **यन्न पदार्थविशेषसमुत्थं, प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ १ ॥** "
>
> **इति श्रीहेमचन्द्रसूरीश्वरवचनं च ।**

तथा च क्रियापदभिन्नशब्दानामपि सिद्धिर्धातुमूलिकैव ॥

## व्युत्पत्त्यव्युत्पत्तिपक्षद्वये धातूनामावश्यकता—

ननु शब्दविषये द्वौ पक्षौ, व्युत्पत्तिपक्षोऽव्युत्पत्तिपक्षश्च; तत्र व्युत्पत्तिपक्षो नाम प्रकृतिप्रत्ययादिमीलनेन शब्दसिद्धिं मन्यमानः पक्षः, अव्युत्पत्तिपक्षस्तु अखण्डा एव शब्दा न तु प्रकृतिप्रत्ययादिमीलनेन जाता इत्यभ्युपगमपरः पक्षः । तत्राद्यपक्षेऽस्तु धातूनामावश्यकता, अपि तु न द्वितीयपक्षे इति चेन्न अव्युत्पत्तिपक्षानुसारिभिरपि साधुशब्दविवेककरणे कल्पितानामपि धात्वादिरूप-प्रकृत्यादीनां स्वीकारात् । यदुक्तम्-' रेखागवयन्यायेन शब्दानां प्रक्रिया स्मृता ' इति । तथा च व्युत्पत्तिपक्षेऽव्युत्पत्तिपक्षे च धातूनामावश्यकता स्फुटैव ॥

## रचयिता—

ननु 'पुरुषविश्वासे वचनविश्वास' इति प्रकृतग्रन्थरचयितुर्नामादीन्यपि वाच्यानीति चेद् ? उच्यते— अस्य ग्रन्थस्य रचयितार **कलिकालसर्वज्ञा भगवन्तो हेमचन्द्रसूरीशाः,** अमीषा महात्मनामनुपमप्रतिभादिविलासो जैनाजैनेषु सकलकोविदकुलालङ्कारकोविदकुलेषु विदित एवेति तद्बोधनायास आम्रतरौ तोरणरचनेव शारदाया अध्यापनविधिरिव लवणे लवणिमापादनमिव कल्याणे पवनविधिरिव मातरि मातुलवर्णनमिव विफल एव, किमु समुदितस्य भानुमालिनो भाननिवेदनकृते प्रयतते कश्चिदपि कृतिवर ? ॥

## विभागत्रयी तद्रचनाविशेषता च—

अस्मिन् ग्रन्थरत्ने विभागत्रयी कल्पनीया । एको मूलधातुविभागो द्वितीयोऽर्थविभागस्तृतीयो विवेचनविभागश्च, तत्र मूलधातुविभागो नाम मूलधातव एव, ते हि सिद्धहेमशब्दानुशासनबृहद्वृत्तौ विकरणप्रत्ययविधायकतत्तत्सूत्रे❋ प्रकृतग्रन्थ-

| | | | |
|---|---|---|---|
| ❋"कर्तर्यनद्भ्य शव्" | (३ ४ ७१) | इत्यत्र | द्वितीय-अदादिगणीया धातव । |
| "दिवादे श्य" | (३ ४ ७२) | ,, | तृतीयदिवादिगणीया धातव । |
| "स्वादे श्नु" | (३, ४, ७५) | ,, | चतुर्थस्वादिगणीया धातव । |
| "तुदादे श" | (३, ४, ८१) | ,, | पञ्चमतुदादिगणीया धातव । |
| 'रुधां स्वराच्छ्नो०" | (३, ४, ८२) | ,, | षष्ठरुधादिगणीया धातव । |
| "कृग्तनादे" | (३, ४, ८३) | ,, | सप्तमतनादिगणीया धातव । |
| "क्र्यादे" | (३, ४, ७९) | ,, | अष्टमक्र्यादिगणीया धातव । |
| "चुरादिभ्य" | (३, ४, १७) | ,, | नवमचुरादिगणीया धातव । |

प्रदर्शिता सन्तीति ॥ एतेभ्योऽन्ये प्रथमभ्वादिगणीया धातवो बोध्या । केचि
द्दाद्यन्तर्गत 'ह्वादि' धातून् तृतीयगणे गणयन्तीति तेषा मते दशगणाः ज्ञेया ॥

कारेण प्रदर्शिता सन्ति। मूलधातुपाठे च गण–सेट्–अनिट्–वेट्–त्वादिविविध-धातुस्वरूपावबोधका साङ्केतिकाक्षररूपा अनुबन्धा अपि तत्तद्धातौ नियोजिता सन्ति, तेन तादृशधातोरुच्चारणे श्रवणे वा बालोऽपि सौकर्येण विशिष्टधातुस्वरूप-मवबुध्य तत्तत्प्रयुक्तानि कार्याणि विदधाति। कस्य कस्यानुबन्धस्य किं किं फल-मिति तु अनुबन्धकारिकाया प्रपञ्चितमस्ति, तथापि किञ्चित्प्रदर्श्यते। 'क्–च्–ट्–त्–प्–य्–श्–ण्–' एतेऽनुबन्धा क्रमेण द्वितीय–तृतीय–चतुर्थ–पञ्चम–षष्ठ-सप्तमा–ऽष्टम–नवमगणावबोधका सन्ति। अनुस्वारोऽनिट्त्वज्ञापक, औकारो वेट्त्वबोधक, इकारो ङकारश्चाऽऽत्मनेपदित्वावबोधक, ईकारो गकारश्चोभयपदि-त्वसूचक इत्यादि। द्वितीयोऽर्थविभागो नाम मूलधातूनामर्थप्रदर्शनम्, प्रदर्शिता-र्थस्य पर्यायान्तरेण स्फुटीकरणम्, मतान्तरीयार्थनिदर्शनं च। विवेचनविभागो नाम धातुजन्याना क्रियापदादिरूपाणां विशिष्टशब्दाना तत्तत्सूत्रादिप्रवृत्तिदर्शनेन साधनविधिरिति॥

## क्रमाद्धातुगणनामानि—

मूलधातवो नवसु गणेषु विभक्ता – तथा हि–

१ भ्वादिगण, २ अदादिगण,
३ दिवादिगण, ४ स्वादिगण,
५ तुदादिगण, ६ रुधादिगण,
७ तनादिगण, ८ क्र्यादि गण,
९ चुरादिगणश्च।

केचिद् दश गणा इति कथयन्ति। तन्मते अदादिगणं विभज्य गणद्वय-गणना कृता, अदादिगणो जुहोत्यादि-(ह्वादि) गणश्चेति, तत्र–

१ भ्वादिगण, २ अदादिगण,
३ जुहोत्यादिगण, ४ दिवादिगण,
५ स्वादिगण, ६ तुदादिगण,
७ रुधादिगण, ८ तनादिगण,
९ क्र्यादिगण, १० चुरादिगणश्च।

वस्तुतस्तु विकरणप्रत्ययभेदेन गणभेदकल्पनान्नवगणा इति कथनं समीचीनम् । किञ्च नव वा दश वा गणाः सन्तु, तथापि न तत्कृतरूपवैलक्षण्यं विकरणप्रत्ययस्य नियतत्वादिति ॥

## पुरा सम्पादनम्—

पुरा 'धातुपारायण' नामाऽयं ग्रन्थ १८९९ मिते खिस्ताब्दे [ ईस्वीसन् १८९९ वर्षे], 'जर्मनप्रोफेसर' (Joh kriste) 'जोह क्रिस्टे' इति नामधेयेन (Dedicated to the Memory of Jeorge Buhler) 'ज्यॉर्ज बुह्लर'स्य स्मरणार्थं मोहमय्या[मुम्बय्या] भायखलास्थ 'एज्युकेशन सोसायटीज् प्रेसा'-ख्यमुद्रणालये मुद्रापयित्वा प्रकाश्य नीतः । तत्प्रकाशनकृते पृथक् पृथक् स्थलेभ्यो धातुपारायणसत्का अनेका हस्तलिखिताः प्राच्याः प्रतयः *सम्पा-

*सम्पादकमहोदयः Joh Kriste प्रस्तावनायां धातुपारायणमुद्रापणसामग्रीमेवं दर्शयति—

*In fixing the text of Hemchandras Dhatuparayana I have availed myself of the following materials —*

I —Mss of the Dhatuparayana

B, Ms or fol 770 of the Royal Library of Barlin (Webers Catalouge Vol II Part 1, No 1681) fols. 103, without date

C Ms or fol 1129 of the same library (Weber, No 1614) fols 13 giving on fols 8 a-13 b the verbal roots and their meanings without commentary, no date

D, Ms No 728 of the Deccan College Collection of 1875-76 fols 112

१९९५ प्रमिते विक्रमाब्दे यदा श्रीयुगादीश्वरभव्यदिव्यप्रासादालंकृते सुप्रसिद्धे श्रीझगडियातीर्थे समुपागतस्तदा तत्रत्यमुख्यकार्यवाहकेन 'झगडिया–कावी'ति तीर्थद्वयसमुद्धारकेन **दीपचन्द्राभिधश्रेष्ठिवर्येणाभ्यर्थितोऽहं 'नीकोरा'** ख्यग्रामादानीतहस्तलिखितप्रतिततिसंशोधनकृते इति । श्रीमद्गुरुचरणानामाज्ञया तत्र हस्तलिखितप्रतिततीनामवलोकनं कुर्वता मया 'धातुपारायण'स्यैका प्राचीना प्रतिः सटिप्पनिका दृष्टा । तस्याः प्रान्ते—

*** "इति आदिसूत्र [त्रं] समाप्तः [सम्] ॥ छ ॥**
**॥ संवत् १५१६ वर्षे । जेठ शुदि ९ । वार बुधे ॥**
**॥ म० राजाल[लि]खितमस्तिः [स्त] ॥ छ ॥"**

इति लेखं दृष्ट्वा, सा प्रति श्रीमद्गुरुपादान्दर्शिता । तां दृष्ट्वा तैरुक्तम्, यदुत—"संक्षिप्तटिप्पनिकायुक्तत्वादयं ग्रन्थो धातुपाठकण्ठस्थकर्तॄणां संक्षेपरुचीनामत्युपयोगीति । किञ्च पूर्वमुद्रितधातुपारायणमधुना दुष्प्राप्यम् । कदाचिल्लभ्येत तथापि प्रायः पञ्चविंशतिमितेन महता मूल्येनेत्यस्य ग्रन्थस्य यदि मुद्रापणं भवेत्तर्हि धातुपाठाभ्यासिनामुपकृतिर्भवेदिति ॥" तदनु श्रीमद्गुरुपादैः श्रीझगडियातीर्थस्यायसम्पादक–मुख्यकार्यवाहक–वयोवृद्ध–धर्मात्मा **श्रेष्ठिश्रीदीपचन्द्रकुशलचन्द्रो**ऽस्य ग्रन्थस्यास्य कृतामहत्त्वादिनिदर्शनपूर्वकं समुपदिष्ट । झगडियातीर्थस्य **'श्रीरिखवदेवजी महाराजनी पेढी'**त्याख्यसंस्थाद्वाराऽस्य प्रकाशनकार्यं कार्यमिति तेन श्रेष्ठिवर्येण स्वीकृतं च । तदनु तत्सम्पादनकार्यं

* "इति आदिसूत्र समाप्तम्" इत्यय लेखो धातूनामादित्व सूचयतीति । यदुत-विश्वविश्वव्यवहारा भाषायत्ता, भाषा च शब्दायत्ता, शब्दाश्च धात्वायत्ताः । अत एव धातूनामादित्वमिति ॥

कृपाकूपारै श्रीमद्गुरुराजैस्त्वया सर्वं सशोध्य सम्पादनीयमित्युक्त्वा मह्य समर्पितं मया च तथास्त्विति प्रोच्य समोद सविनयमुररीकृतमिति ॥

### प्राप्तप्रतिव्यतिकरः—

यामवलम्ब्याऽय ग्रन्थो मुद्रित सा प्रतिर्दशपत्रा, तस्या आयाम द्वादश (Inch) 'इच' मित व्यासश्च सार्धचतुष्टय 'इच' मित, मूललेखस्तु क्वचिन्नव क्वचि सपादनव 'इच' प्रमित, परित टिप्पनिकापरिवृतश्च । इय प्रतिरनेकस्थलेषु लेखककृताऽनेकाशुद्धिभिरशुद्धा घनलेखयुक्ता धा वङ्कविकला टिप्पनिकास कप्रति-कचिकला च । टिप्पनिका च चुरादिगणीयाष्टोत्तरशतधातुपर्यन्तेन, साऽपि कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिभगवत्प्रणीतस्वोपज्ञवृत्तेरुद्धृत्यैव निर्मितास्ति, तत्राऽपि न कश्चिद्विशेषोऽपि तु सक्षेप एव । अयच्च पुरा मुद्रितधातुपारायणसम्पादकेन या प्रतयो लब्धास्तास्व्य इय प्रतिः प्राच्येति प्रातलिखितसवसगदलोकनेन सिद्ध भवतीति ॥

### सम्पादनं तद्वैशिष्टयमुपयोगिता च—

सम्पादितोऽय ग्रन्थोऽशुद्धिबाहुल्या मूलप्रतेर्महता परिश्रमेण, पूर्वमुद्रितस्वोपज्ञवृत्तियुतधातुपारायणमवलम्ब्य स्वानुभवानुसारेण च सशोधन कृतम् एत सम्पादनमपि पाठकसौकर्य मनुलक्ष्य कृतम्, तथा हि–प्रत्येकधातु नम्बराङ्केनाङ्कित । अन्त्यवर्णक्रमानुसारेण च मुद्रणविभाग कृत । मूले टिप्पनिकाया च यत्र यत्र त्रुटिरवगता तत्र तत्र सर्वत्र [ ] इत्याकारकचिह्नेन सा सम्पूर्तिमापादिता । कतिपयस्थलेषु [ ] एतच्चिह्नान्तर्गतलेख स्पष्टीकरणार्थमपि न्यस्त । टिप्पनिकाया च प्रतिकदानेन पाठान्तरदर्शनादिना च परिवर्धितो विशदीकृतश्चाय ग्रन्थ इति ॥

चुरादिगणे अष्टोत्तरशततमाद्धातोरग्रे टिप्पनिकामदृष्ट्वा विचारितं मया यदुतात्र टिप्पनिकाकारेण येन केनाऽपि कारणेन टिप्पनिका न समापिता, अथ त्रुटितटिप्पनिकानुसन्धानं यदि भवेत्तदाऽयं ग्रन्थः पूर्णटिप्पनिकयाऽतीव शोभावहेत् विपठिषूणामुपकारोऽपि भवेच्चेति । एतादृशोद्देशादेव टिप्पनिकाकाररचनाशैलीमनुलक्ष्य पूर्वमुद्रितपारायणानुसारेण **चुरादिगणीय '१०९ सम्बण्' धातुमारभ्यासमाप्ति त्रुटितटिप्पनिकानुसन्धानं** विहितं मयेति ॥

मूलग्रन्थे: प्रान्ते कण्ड्वादिधातूनां मूलमात्रपाठं दृष्ट्वा तदर्थादिप्रकाशयित्री **'कण्ड्वादिप्रकाश'** नाम्नी टीका मया विरचिता तया च विभूषितोऽयं ग्रन्थः । आदौ **सेट्-अनिट्-वेट्धातुविभागप्रदर्शकयन्त्रेण,** तत्प्रतिपादिकाभिः कारिकाभिश्चालंकृतमिदं पुस्तकमिति । अत एव धातुसाहित्यक्षेत्रेऽत्युपयोगिताऽस्येति ॥

उपसंहारः—

यद्यपि यथामति महता परिश्रमेण संशोध्य त्रुटितटिप्पनिकामनुसन्धाय **'कण्ड्वादिप्रकाश'**नाम्नीटीकाकलित**'कण्ड्वादि'**नालंकृत्य विविधस्थलेषु विशदीकृत्य च सम्पादितोऽयं ग्रन्थस्तथाऽप्यनाभोगविलसिता मुद्रणालय-(प्रेस) दोषसमुद्भूता या काचन स्खलना दृष्टिपथमागच्छेत्तां संशोध्य पाठकमहोदयाः पठन्त्विति निवेद्य; येषां अतिपूज्यानां पूज्यपादानां परमोपकारिणामनवद्यगद्यपद्यविद्यापारावारपारीणानां परमगुरूणां गुरूणामनल्पकृपाप्रसादेनेदं सम्पादनकार्यं निर्विघ्नं सम्पादितं तेषां प्रभूणां सर्वदाऽहमृणीति सदा तदनुग्रहं मन्ये । एतद्ग्रन्थमुद्रणे अर्थसाहाय्यमर्पितं तया. **'श्रीरिखवदेवजी महाराजनी पेढी'** इति अभिधाया संस्थायाः कार्यवाहकस्य **श्रेष्ठिश्रीदीपचन्द्रभ्रातुश्च**

सहकारोऽपि न विस्मरणीयः । यदीह क्वापि स्खलना दृष्टिपथगा भवेत्तदा विशदहृदयैर्ज्ञापनीया, येन पुनर्मुद्रणेऽपि तत्कृता अशुद्धिर्न स्यादिति विरमामि ॥

इत्यलं प्रसङ्गेन ॥ श्रेयोऽस्तु ॥

श्रीविजयनेमिसूरीश्वरज्ञानशाला,
पांजरापोळ,
राजनगरम्-(अमदावाद)
वि. सं. १९९६, आषाढशुक्ल
नवमी, शनिवासरः ॥

शासनसम्राट्-श्रीविजयनेमिसूरीश्वरपट्टालङ्कार-
श्रीविजयलावण्यसूरीश्वरचरणारविन्दमिलिन्द-
दक्षविजयो मुनिः ॥



॥ आशैशवशीलशालिने श्रीनेमीश्वराय नमो नमः ॥

# ॥ श्रीदेवगुर्वष्टकम् ॥

## [ श्लेषोल्लसितानि पञ्चचामरवृत्तानि ]

नमामि नेमितीर्थपं सदा सुशीलशालिनं, समस्तसूरिचक्रचक्रवर्त्तिताविराजितम् ।
महीप्रदीपमालिकाधिकप्रकाशशालिकां, विधाय विश्वनालिकां दधानमात्मसम्भवम् ॥

शिवाङ्गनाङ्गज तथाप्यलं शिवाङ्गजन्मनि, समुद्रजातरूपचारुवैभवोपशोभितम् ।
ततो नु साधुशङ्करं नरं च चक्रिमुत्तमं, नमामि नेमितीर्थपं सदा सुशीलशालिनम् ॥

विशालनेमचन्द्रमौलिकाटपट्टशालिनं, बालचन्द्रचञ्चगज्जनप्रमोददाकृतिम् ।
भक्तदयलक्षलक्षणोपलक्षितं दमक्षमं, नमामि नेमितीर्थपं सदा सुशीलशालिनम् ॥

परं दनादतर्जिकम्बुकण्ठपेशलध्वनि—चमत्कृताखिलाङ्गराजिराजिगीतगौरवम् ।
निजौजसाद्विसञ्जमार्दनावलेपलोपिनं, नमामि नेमितीर्थपं सदा सुशीलशालिनम् ॥

सुदर्शनप्रधानपूरुषोत्तमैकबान्धवं, प्रकल्प्य कल्पनाकृतं सुखं नु भोगराजिजम् ।
निधानमादधानमात्मशर्मणां यथास्थितं, नमामि नेमितीर्थपं सदा सुशीलशालिनम् ॥

क्षमाधरं वरं सुवृद्धिमाश्रितं गतं गतं, ततो दधानमात्मसार्वभौमसम्पदां पदम् ।
क्षमाभृदुत्तमाङ्गचुम्बिताङ्घ्रिपद्मरेणुकं, नमामि नेमितीर्थपं सदा सुशीलशालिनम् ॥

विभाव्य नामगौ नमौ च धर्मशान्तरावपि, युतौ गुणेन च श्रिया च चक्रिमादिमागमौ ।
ततोऽमरद्रुकामधेनुकामकुम्भतोऽधिकं, नमामि नेमितीर्थपं सदा सुशीलशालिनम् ॥

पदत्रयप्रचारगाञ्च गां सुधाङ्गणं गतां, तथाप्यशेषदेशकाललीनभावगामिनीम् ।
सुधाप्रवाहवाहिनीं वहानमिज्यताभुवम्, नमामिनेमितीर्थपं सदा सुशीलशालिनम् ॥

श्रीमत्तपोगणाम्बराम्बरमणि-श्वेताम्बरशिरोमणि-शासनसम्राट्-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीकदम्बगिरिप्रमुखानेकतीर्थोद्धारक-क्षमापालावलि-पूजितपादपद्म-ब्रह्मसत्र-प्रौढप्रभावाश्रित-प्रातःस्मरणीय-जगद्गुरु-

# भट्टारकाचार्यवर्य श्रीमद्विजयनेमिसूरीश्वराः ॥

जन्म-
विक्रम सं. १९२९,
कार्तिक शुक्ल १,
मधुमती (महुवा)।

दीक्षा-
सं. १९४५ ज्येष्ठ
शुक्ल ७,
भावनगर।

गणिपद-
सं. १९६० कार्तिक
कृष्ण ७,
वल्लभीपुर (वळा)।



पन्यासपद
सं. १९६०
मार्गशीर्ष शुक्ल
वल्लभीपुर
(वळा)।

सूरिपद-
सं. १९६४
[illegible] ५,
[illegible]नगर

भव्याब्ध्यामदवृद्धिचन्द्रमुनिपं श्रीनेमिसूरीश्वरं,
सम्यग्दर्शनबोधदानमदनं चारित्रभानूदयम् ।
जैनेन्द्रागमतत्त्वनन्दनघनं विज्ञान-धर्माकरं,
वन्देऽहं सुगुणाऽमृतेन्दुममलं लावण्यमोदाश्रमम् ॥ १ ॥

[ शार्दूलविक्रीडितवृत्तम् ]

देवश्रेष्ठगुरुद्वयाष्टकमिदं गीतं शमाप्तिप्रदं,
दक्षाभ्यर्थनया प्रशुद्धमनसा भक्त्यैकलीनात्मना ।
लावण्येन भवर्षिकेन रचितं पञ्चादिमैश्चामरैः,
श्रोतॄणां पठतां नृणाञ्च शिवदं स्तात्पुष्पदन्तावधि ॥ १ ॥

॥ इति श्रीदेवगुर्वष्टकम् ॥



# विषयानुक्रमः





श्रीमत्तपोगच्छाधिपति-शासनसम्राट्-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-जगद्गुरु-
सुगृहीतनामधेय-भट्टारकाचार्य—श्रीमद्विजयनेमिसूरीश्वर—पट्टालंकार—
व्याकरणवाचस्पति-कविरत्न-शास्त्रविशारद-व्याख्यानसुधासुधाकर-धातुरत्नाकर-
निरुपमञ्जरीटीकाद्यनेकनिबन्धनिबन्धनधुरन्धर-विबुधशिरोमणि-भट्टारक-

## आचार्यश्रीमद्विजयलावण्यसूरीश्वराः ॥



न्यायव्याकरणागमे सुललिते काव्ये तथा छन्दसि,
साहित्यप्रभृतौ प्रबन्धगगने यद्कीर्ति विस्तृता।
प्रत्युत्पन्नमतिः प्रमादमदनं व्याख्यानवाचस्पतिः,
सोऽयं दक्षप्रमोददो विजयते लावण्यसूरीश्वरः ॥ १ ॥

॥ ॐ ॥

॥ झगडीयातीर्थाधीश्वराय श्रीआदीश्वराय नमो नमः ॥

॥ कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिभगवते नमो नमः ॥

# ॥ श्रीहैमधातुपारायणसङ्क्षेपः ॥



॥ अर्हँ ॥

## १. भू सत्तायाम् ॥

इह तावत् पदपदार्थज्ञानद्वारोत्पन्न हेयोपादेयज्ञानं निःश्रेयसहेतुरिति प्रसिद्धम् । पदपदार्थज्ञानं च नयनिक्षेपादिभिरधिगमोपायैः परमार्थतः, व्यवहारतस्तु प्रकृत्यादिभिरिति; पूर्वाचार्यप्रसिद्धा एव सुखग्रहणस्मरणकार्यसंसिद्धये विशिष्टानुबन्धसम्बन्धक्रमाः सहार्थेन प्रकृतयः प्रस्तूयन्ते । तत्र यद्यपि १. नाम २ धातु ३. पदभेदात्, १. राजा २. जयति ३. पूर्वाह्णेतरां पचतितरामित्यादौ त्रेधा प्रकृतिस्तथाऽपि नामपदयोर्धातुमूलत्वाद्धातुप्रकृतिरेवैका प्रधानमिति अव्युत्पत्तिपक्षवादिनामपि व्युत्पत्तिपक्षानुसारेणैव शब्दस्वरूपनिर्णय इति तत्रापि धातुमूलत्वमेव । धातुप्रकृतिस्तु द्वेधा, १. शुद्धा २. प्रत्ययान्ता च । शुद्धा भू इत्यादिः । प्रत्ययान्ता-गोपाय, कामि, ऋतीय, जुगुप्स, कण्डूय, बोभूय, बोभू, चोरि, भावि, बुभूष इत्यादिः । एषाऽपि शुद्धमूलैवेति शुद्धैवोदाह्रियते ॥

[भू सत्तायाम्] भू इत्यविभक्तिको निर्देशः सान्तरान्तशङ्कानिरासार्थः, एवं सर्वत्र । भू इत्येषा प्रकृतिः सत्तायां वर्तते । अभूत्, भूत इत्यादौ प्रयो-

गित्वदर्शनादूकारस्य "अप्रयोगीत्" [१, १, ३७] इतीत्संज्ञा न भवति । एवमन्यत्रापि ॥

वर्णसमाम्नायक्रमेण स्वरान्तव्यञ्जनान्तधातूपदेशप्रतिज्ञानात् 'पां पाने' इत्यादेः प्रथमं निर्देशे प्राप्ते वृद्धसमयानुवर्त्तनार्थं प्रथममस्य पाठः । यद् वृद्धाः- "भूवादयो धातव" इति, मङ्गलार्थं च । एवम्-अदाद्यादिगणेष्वपि वृद्धसमयानुवर्त्तनमदिप्रभृतीनां प्रागुनिर्देशे प्रयोजनमभ्यूह्यम् । सतो भावः सत्ता, अस्तित्व द्रव्यधर्मः सर्वधात्वर्थसामान्यमिति यावत् । यदाहुः—

"धात्वर्थः केवलः शुद्धो, भाव इत्यभिधीयते ॥"

तथा यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तीति भवन्तीपरं प्रयोक्तव्यमिति ॥

*ननु भुवः सत्तावाचित्वे धातुत्वमनुपपन्नम्, क्रियार्थो धातुः, क्रिया च* स्पन्दरूपा । [सत्ता तु द्रव्यादिषु सत्सदित्यनुवृत्तप्रत्ययाभिधानलिङ्गा स्पन्दरूपा न भवति] नैष दोषः, यथा जानाति पश्यतीत्यादीनां ज्ञानदर्शनादयो द्रव्यगुणा अपरिस्पन्दात्मका अप्याख्यातप्रकृतिवाच्याः सन्तः क्रियाव्यपदेशमर्हन्ति तथा सत्ताऽपि । मणि-मुकुर-कृपाणादिज्ञापकवैचित्र्याच्चैकरूपस्याऽपि मुखादेर्नानात्वोपलब्धेर्धातुवाच्यैव सत्ता क्रियात्वमास्कन्दति, न प्रातिपदिकवाच्येति नाऽव्यवस्था ॥

*किंच पाकादिक्रियाणां त्रैकाल्याभिव्यञ्जकत्वमुपलब्धं* पचति पक्ष्यति अपाक्षीदित्यादि, तच्चेहापि भवति भविष्यति अभूदिति धातुवाच्यायाः सत्तायामुपलभ्यमानं क्रियात्व व्यवस्थापयति । अत एव वृक्ष इत्यादि प्रातिपदिकवाच्यायाः सत्तायाः न क्रियात्वम् । एवं च स्थिते क्रियावाचित्वमात्रमाख्यातुं सत्तोपात्ता ॥

अर्थान्तराण्यप्यनयोपलक्ष्यन्ते । यदाहुः—

"निपाताश्चोपसर्गाश्च, धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे, पाठस्तेषां निदर्शनम् ॥ १ ॥" [इति]

गोदोहं स्वपीति । कुरून् शेते । अर्थान्तरवृत्त्यादिना च सकर्मकस्याप्यकर्मकत्वं भवति । यदाह—

"धातोरर्थान्तरे वृत्ते-र्धात्वर्थेनोपसङ्ग्रहात् ।
प्रसिद्धेरविवक्षातः, कर्मणोऽकर्मिका क्रिया ॥ १ ॥" [इति]

अर्थान्तरे वर्त्तमानाद्धातोः सकर्मकस्याप्यकर्मिका क्रिया भवति । यथा भारं वहति, उद्यच्छतीत्यर्थः । नदी वहति, स्रवतीत्यर्थः ॥ कर्मणो धात्वर्थान्तःप्रवेशादकर्मकत्वम् । यथा-'जीव प्राणधारणे' जीवति । 'हृदि पुरीषोत्सर्गे' हदते । अत्र प्राणपुरीषाख्ये कर्मणी धात्वर्थेनैव क्रोडीकृते ॥ कर्मणः प्रसिद्धत्वात् । यथा-देवो वर्षति ॥ कर्मणोऽविवक्षितत्वात् । [यथा]-नेह पच्यते, नेह भुज्यते । कर्माविवक्षा चौदासीन्यनिवृत्तिमात्रपरतया प्रयोगात् । यथा-किं करोतीति प्रश्ने पचति पठतीत्यादि प्रत्यवस्थानम्, न तु भवति विद्यते चेत्यादि तेषामपर्यनुयोज्यत्वात् । यत्तु किं करोतीति प्रश्ने भवतीत्युत्तरं तत् क्रियान्यकर्मनिबन्धनम्, न तु बाह्यकर्मापेक्षं भवनं करोतीत्यर्थावगमात् । क्रिया हि सर्वधातूनामन्तरं कर्म, अत एव क्रियाविशेषणानां कर्मत्वं स्मरन्ति ॥ नन्वेवं क्रियाविशेषणा-[२, २, ४१]" दिति योगो व्यर्थः ["कर्मणि" (२, २, ४०) त्येव द्वितीयासिद्धेः] । नैवम्, आन्तरकर्मणा सकर्मणोऽप्यकर्मककार्यप्रतिपत्त्यर्थत्वाद्योगस्य । तेन सुखं सुप्त इत्यादौ कर्त्तरि क्तः सिद्धः । सुखं स्यातेत्यादौ तन्निमित्ता षष्ठी न भवतीति । अत एव सकर्मकाऽकर्मकव्यवहारो द्रव्यकर्मनिमित्त उच्यते ॥

भू इति निरनुस्वारस्य पाठाद् "एकस्वरादनुस्वारेत" [४, ४, ५६] इट्त्वं न भवति । सेट्त्वाऽनिट्त्वे च यद्यपि "स्ताद्यशितोऽत्रोणादे [४, ४, ३२] रिति प्रत्ययस्यादौ विधानात् प्रत्ययस्यैव, तथाप्युपचारेण धातोर्व्यतिभविषीष्ट, भविष्यति । एवं पदस्य साक्षात् प्रकृतिर्भूरुदाहृतः । ॥ प्रकृतिस्तु णिगादिपूदाहार्या ॥ १ ॥

२. पां पाने । ३. घ्रां गन्धोपादाने । ४. ध्मां शब्दाग्निसंयोगयोः । ५. ष्ठां गतिनिवृत्तौ । ६. म्नां अभ्यासे । ७. दांम् दाने ॥ (आदन्ताः ॥ ६ ॥) ॥

८. जिं ९. ज्रिं अभिभवे। १०. क्षिं क्षये। ११. इं (इदन्ताः ॥४॥) १२. दुं १३. द्रुं १४. शुं १५. सुं गतौ। १६. ध्रुं स्थैर्ये च। १७. सुं प्रसवैश्वर्ययोः ॥ (उदन्ताः ॥६॥) ॥

---

अथाऽऽदन्ताः पठनिरश्च । विशेषानुबन्धाभावाद् ध्वाधुं यावत् परस्मैपदिनः । [ध्मां शब्दाग्निसंयोगयोः] शब्दे मुखादिना चाग्निसंयोगे ॥ [ष्ठां] षोपदेशः "षः सोऽष्ट्यैष्ठिवष्वष्क" [२, ३, ९८] इति सादेशार्थः । तथा च कृतत्वात् सस्य तिष्ठासतीत्यादौ "नाम्यन्तःस्था०" [२, ३, १५] इत्यादिना षत्वं सिद्धम्, स्थातेत्यादौ सकारश्रवणं च ॥ [म्नां अभ्यासे] अभ्यासः पारम्पर्येण वृत्तिः ॥ [दांम्] म् इत्, अप्रयोगित्वात्, स च औदीत्यादौ विशेषणार्थः । "अवौ दाधौ दा" [३, ३, ५] इति दासंज्ञा। अनुस्वारेत्त्वाच्च सम्प्रदाता ॥६॥

इतः परमिदन्ताश्चत्वारः । [जिं] केचिदकर्मकत्वार्थं 'जि जये' इति पृथक् पठन्ति, जयः सर्वोत्कर्ष इति च व्याचक्षते । तदयुक्तम्, उत्कर्षस्याभिभवविशेषत्वाद् सकर्मकत्वाऽकर्मकत्वयोश्च विवक्षानिबन्धनत्वात् । अन्ये तु ज्रिस्थाने ज्रृं इति ऋकारान्तं पठन्ति ॥ [क्षिं क्षये] क्षयति । कर्मकर्त्तरि तु क्षीयते ॥ ४ ॥

षडुदन्ताः । [ध्रुं स्थैर्ये च] चकाराद्गतौ । ध्रवति । 'ध्रुंत गतिस्थैर्ययो' रित्यस्य ध्रुवति। अचि कुटादित्वाद् ङित्वे ध्रुवः ॥ [सुं प्रसवैश्वर्ययोः] गतावप्येके। अषोपदेशत्वात् षत्वाभावे सुसाव, येषां तु षोपदेशस्तन्मते षत्वम्, सुषाव ॥६॥

१८. स्मृं चिन्तायाम् । १९. गृं २०. घृं सेचने । २१. औस्वृ शब्दोपतापयोः । २२. ह्वृं वरणे । २३. ध्वृं २४. ह्वृं कौटिल्ये । २५. सृं गतौ । २६. ऋं प्रापणे च ॥ (ऋदन्ताः ॥ ९ ॥) ॥

२७. तॄ प्लवनतरणयोः ॥ (ॠदन्तः ॥१॥) ॥

२८ दधें पाने ॥ (एदन्तः ॥ १ ॥) ॥

२९ दैंव् शोधने । ३०. ध्यैं चिन्तायाम् । ३१. ग्लैं हर्षक्षये । ३२. म्लैं गात्रविनामे । ३३. द्यैं न्यङ्गकरणे । ३४. द्रैं स्वप्ने । ३५. ध्रैं तृप्तौ । ३६. कैं ३७. गैं ३८. रैं शब्दे । ३९. ष्ट्यैं ४०. स्त्यैं सङ्घाते च । ४१. खैं खदने ।

---

ऋदन्ता नव । [औस्वृ] औदित्वाद् वेट्, स्वर्त्ता स्वरिता ॥ [ह्वृं वरणे] वरणं स्थगनम् ॥ [ऋं प्रापणे च] चकाराद्गतौ ॥ ९ ॥

[तॄ प्लवनतरणयोः] प्लवनं मज्जनम्, तरणमुल्लङ्घनम् ॥ १ ॥

इतः परमैदन्ता अनुस्वारेतश्चैकविंशतिः । [दैंव् शोधने] वकारो "अवौ दाधौ दा" [३, ३, ५] इति दासंज्ञानिषेधार्थः ॥ [ग्लैं हर्षक्षये] इह हर्षक्षयो धात्वपचयः ॥ [म्लैं गात्रविनामे] विनामः कान्तिक्षयः ॥ [द्यैं न्यङ्गकरणे] कुत्सितमङ्गं न्यङ्गम् ॥ [ष्ट्यैं स्त्यैं सङ्घाते च] चकाराच्छब्दे । "षः सो०" [२, ३, ९८] इति ष्ट्यैवर्जनात् षस्य सोऽत्र न भवति ॥ [खैं खदने] खदनं हिंसा स्थैर्यं च ॥२१॥

४२. क्षैं ४३. जैं ४४. सैं क्षये । ४५. स्त्रैं ४६. श्रैं पाके । ४७. पैं ४८. ओवैं शोषणे । ४९. ष्णैं वेष्टने ॥ (ऐदन्ताः ॥२१॥) ॥

५०. फक्क नीचैर्गतौ । ५१. तक हसने । ५२. तकु कृच्छ्रजीवने । ५३. शुक गतौ । ५४. बुक्क भाषणे ॥ (कान्ताः ॥ ५ ॥) ॥

५५. ओखृ ५६. राखृ ५७. लाखृ ५८. द्राखृ ५९. ध्राखृ शोषणालमर्थयोः । ६०. शाखृ ६१. श्लाखृ व्याप्तौ । ६२. कक्ख हसने । ६३. उख ६४. नख ६५. णख ६६. वख ६७. मख ६८. रख ६९. लख ७० मखु ७१. रखु ७२. लखु ७३. रिखु ७४. इख ७५. इखु ७६. ईखु

अथ कान्ताः पञ्च सेटश्च । [फक्क नीचैर्गतौ] भकारः श्रुतिसुखार्थः । एवं शेषेष्वप्यदन्तेषु । नीचैर्गतिर्मन्दगमनम्, असद्व्यवहारो वा ॥ [तक हसने] सहने इत्यन्ये ॥ [तकु] उदित् "उदितः स्वराश्नोऽन्तः" [४,४,९८] इति नाऽऽगमः ॥ [बुक्क भाषणे] भषणे इत्यन्ये; भषणं भर्त्सनम् ॥ ५ ॥

अथ खान्ता द्वाविंशतिः सेटश्च । ऋदित्वात् ङपरे णौ "उपान्त्यस्य०" [४, २, ३५] इति न ह्रस्वः ॥ [कक्ख] द्वितीयादिमेनं केचिन्मन्यन्ते । खक्खति ॥ [नख] णोपदेशत्वात् प्रणखतीति, अत्र "अदुरुपसर्गा०" [२, ३, ७७] इति न णत्वम् ॥ [णख] णोपदेशाभावाण्णत्वम् ॥ २२ ॥

(खान्ताः ॥२२॥) ७७. वलग ७८. रगु ७९. लगु ८०. तगु ८१. श्रगु ८२. श्लगु ८३. अगु ८४. वगु ८५. मगु ८६. स्वगु ८७. इगु ८८. उगु ८९. रिगु ९०. लिगु गतौ । ९१. त्वगु कम्पने च । ९२. युगु ९३. जुगु ९४. वुगु वर्जने । (गान्ताः ॥ १८ ॥) ॥

९५. गग्घ हसने । ९६. दघु पालने । ९७. शिघु आघ्राणे । ९८. लघु शोषणे ॥ (घान्ताः ॥ ४ ॥ सेटः ॥)॥

९९. शुच शोके । १००. कुच शब्दे तारे । १०१. क्रुञ्च गतौ । १०२. कुञ्च च कौटिल्याल्पीभावयोः । १०३.

---

अथ गान्ता अष्टादश सेटो वलगवर्जिता उदितश्च । लगुः सञ्जने रूढः ॥ तगुः स्खलने रूढः ॥ वगुर्गतिवैकल्ये रूढः ॥ श्रवलगुदितमप्येके पठन्ति ॥ [त्वगु कम्पने च] चकाराद् गतौ । स्थितस्यैव चलनं कम्पनम् । गतिर्देशान्तरप्राप्तिहेतुः क्रिया ॥ १८ ॥

अथ घान्ताश्चत्वारः सेटो गग्घवर्जिता उदितश्च । [दघु पालने] वर्जनेऽपीत्यन्ये ॥ [शिघु आघ्राणे] आघ्राणं गन्धोपादानम् ॥ [लघु शोषणे] अत्र 'मघु मण्डने' इत्येके पठन्ति ॥ ४ ॥

अथ चान्ता विंशतिः सेटश्च । [कुच शब्दे तारे] तारे उच्च इत्यर्थः । शब्दमात्रेऽपीत्यन्ये । [कुच सम्पर्चनेति] ज्वलादौ पठिष्यमाणोऽपीहार्थविशेषात् पुनः पठितः ॥ [कुञ्च च] चकारः क्रुञ्चोऽनुकर्षणार्थः ॥

---

श्रभ्य उभ इत्यादि दण्डकधातुमध्ये पाठात्तद्दण्डकपाठमात्रत्वेऽपि न क्षतिः ॥

लुञ्च अपनयने। १०४. अर्च पूजायाम्। १०५. अञ्चू गतौ च। १०६. वञ्चू १०७. चञ्चू १०८. तञ्चू १०९. त्वञ्चू ११०. मञ्चू १११. मुञ्चू ११२. म्रुञ्चू ११३. म्रुचू ११४. म्लुचू ११५. ग्लुञ्चू ११६. पस्च गतौ। ११७. म्रुचू ११८. ग्लुचू स्तेये॥ (चान्ताः ॥२०॥ सेटः॥)॥

११९. म्लेछ अव्यक्तायां वाचि। १२० लछ १२१. लाछु लक्षणे। १२२. वाछु इच्छायाम्। १२३. आछु आयामे। १२४. ह्रीछ लज्जायाम्। १२५. हुर्छा कौटिल्ये। १२६. मुर्छा मोहसमुच्छ्राययोः। १२७. स्फुर्छा १२८. स्मुर्छा विस्मृतौ। १२९. युछ प्रमादे। (छान्ताः ॥११॥ सेटः ॥)॥

१३०. धृज १३१. धृजु १३२. ध्वज १३३. ध्वजु

---

[अञ्चू गतौ च] चकारात् पूजायाम्। "क्रियाव्यतिहारेऽगति०" [३, ३, २३] इति [गत्यर्थवर्जनादत्रौ नात्मनेपदम्] व्यत्यञ्चति मिथुन ग्रामम्। [पूजायां तु प्रतिषेधाभावादात्मनेपदमेव] व्यत्यञ्चते मिथुनं देवम्। ऊदित्वात् ["ऊदितो वा" (४, ४, ४२) इति] क्त्वायां वेट्॥ [म्रुचू ग्लुचू स्तेये] गतावपि केचित्॥२०॥

अथ छान्ता एकादश सेटश्च। [म्लेछ] "स्वरेभ्य" [१, ३, ३०] इति छस्य द्वित्वे [म्लेच्छति॥ 'हुर्छा कौटिल्ये'। हूर्छति।] "भ्वादेर्नामिनो०" [२, १, ६३] इति दीर्घत्वम्। आदित्वाद् "आदितः" [४, ४, ७१] इति क्तयोरिडभावः॥ ११॥

अथ जान्तास्त्रयश्चत्वारिंशत् त्यजभञ्जवर्जाः सेटश्च। [धृज] इकारेणान्त्य

१३४. भ्रज १३५. भ्रजु १३६. वज १३७. व्रज १३८. षस्ज गतौ । १३९. अज क्षेपणे च । १४०. कुजू १४१. खुजू स्तेये । १४२. अर्ज १४३. सर्ज अर्जने । १४४. कर्ज व्यथने । १४५. खर्ज मार्जने च । १४६. खज मन्थे । १४७. खजु गतिवैकल्ये । १४८. एजृ कम्पने । १४९. ट्वोस्फूर्जा वज्रनिर्घोषे । १५०. क्षीज १५१. कूज १५२. गुज १५३. गुजु अव्यक्ते शब्दे । १५४. लज १५५. लजु १५६. तर्ज भर्त्सने । १५७. लाज १५८. लाजु भर्जने च । १५९. जज १६०. जजु युद्धे । १६१. तुज हिंसायाम् । १६२. तुजु वलने च । १६३. गर्ज १६४.

---

इति केचित् । भ्रेजति ॥ [अज क्षेपणे च] चकाराद्गतौ ॥ [कुजू खुजू] ऊदित्वात् क्त्वायां वेटौ, कुक्त्वा खुक्त्वा ॥ [खर्ज मार्जने च] चकाराद् व्यथने ॥ [खज मन्थे] मन्थो विलोडनम् ॥ [खजु गतिवैकल्ये] गतेर्वैकल्यं विकृतत्वम् ॥ [एजृ कम्पने] ऋदित्वाद् "उपान्त्यस्य०" [४, २, ३५] इति न ह्रस्वः ॥ [ट्वोस्फूर्जा] ट्वित्वात् "ट्वितोऽथु" [५, ३, ८३] स्फूर्जथुः । ओदित्वात् क्तयोस्तस्य नत्वे, आदित्वाच्चेडभावे स्फूर्णः । "भ्वादेर्नामिन०" [२, १, ६३] इति दीर्घत्वे सिद्धे, दीर्घोच्चारणं भ्वादेरित्यस्याऽनित्यत्वज्ञापनार्थम् । तेन कुर्दते कुर्दन इत्यपि सिद्धम् ॥ [लाज लाजु भर्जने च] चकाराद्भर्त्सने । [तुजु वलने च] चाद्धिंसायाम् । पालनेऽपीत्यन्ये । वलनं प्राणनम् । तुजुण् हिंसाद्यर्थो भासार्थश्चान्यः ॥ [गर्ज] बहुलमेतन्निदर्शनमिति वचनात् चुरादित्वे

गजु १६५. गृज १६६. गृजु १६७. मुज १६८. मुजु १६९. मृजु १७०. मज शब्दे । १७१. गज मदने च । १७२. त्यजं हानौ । १७३. षञ्जं सङ्गे ॥ (जान्ताः ॥४४॥)

१७४. कटे वर्षावरणयोः । १७५. शट रुजा-विशरण-गत्यवशातनेषु× । १७६. वट वेष्टने । १७७. किट १७८. खिट उत्त्रासे । १७९. शिट १८०. षिट अनादरे । १८१. जट १८२. झट सङ्घाते । १८३. पिट शब्दे च । १८४. भट भृतौ । १८५. तट उच्छ्राये । १८६. खट काङ्क्षे । १८७. णट नृतौ । १८८. हट दीप्तौ । १८९. षट अवयवे । १९०. लुट विलोटने । १९१. चिट प्रैष्ये । १९२. विट शब्दे । १९३. हेट विबाधायाम् । १९४. अट १९५. पट १९६. इट १९७. किट १९८. कट १९९.

गजंयति ॥ [गज मदने च] चाच्छब्दे । मदनं मदोत्पत्तिः ॥ [त्यजं हानौ] हानिस्त्यागः । अनुस्वारेत्त्वादेट् ॥ ४४ ॥

अथ टान्ता अष्टात्रिंशत् सेटश्च । [कटे वर्षावरणयोः] वृष्टावावरणे चार्थे ॥ [किट खिट उत्त्रासे] उत्त्रासो भयोद्भतिरुद्भासनं च ॥ [पिट शब्दे च] चकारात् सङ्घाते ॥ [भट भृतौ] भृतिर्वेतनं भरणं च ॥ [खट काङ्क्षे] काङ्क्षाऽस्यास्तीति अभ्रादित्वादः काङ्क्षः । काङ्क्षाविशिष्टो धात्वर्थः ॥ [णट नृतौ] नताविल्यन्ये । हिंसायामप्येके । नाऽयं णोपदेश इत्येके ॥

×'अवशातनेषु' इत्यत्र अवसादनेष्विति पाठान्तरम् ॥

कट्टु २००, कटै गतौ । २०१ कुट्टु वैकल्ये । २०२. मुट प्रमर्दने । २०३. चुट २०४. चुट्टु अल्पीभावे । २०५. वट्टु विभाजने । २०६. रुट्टु २०७. लुट्टु स्तेये । २०८. स्फट २०९. स्फुट्टृ विसरणे । २१०. लट बाल्ये । २११. रट (टान्ता ॥३८॥) ॥ २१२. रठ च परिभाषणे । २१३. पठ व्यक्तायां वाचि । २१४. वठ स्थौल्ये । २१५. मठ मदनिवासयोश्च । २१६. कठ कृच्छ्रजीवने । २१७. हठ बलात्कारे । २१८. उठ २१९. रुठ २२०. लुठ उपघाते । २२१. पिठ हिंसासङ्क्लेशयोः । २२२. शठ कैतवे च । २२३. शुठ गतिप्रतीघाते । २२४. कुट्ठु २२५. लुट्ठु

[कटै] एदित्वात् अकटीत् ॥ [कट्टु] टान्त इति कश्चित् ॥ [मुट] उदित् केचित्* ॥ [वट्टु विभाजने] विभागीकरणे ॥ [रुट्टु लुट्टु स्तेये] ठान्तावित्यन्ये ॥ [स्फुट्टृ] ऋदित्वाद् वाऽङ् ॥ [लट बाल्ये] बालक्रियायाम् ॥ [रट रठ च] चात् लट ॥ ३८ ॥

अथ ठान्ताः सप्तदश सेटश्च । [मठ मदनिवासयोश्च] चकाराद् स्थौल्ये ॥ [हठ बलात्कारे] प्लवनकीलबन्धनयोरित्यन्ये ॥ [शठ कैतवे च] चकाराद्धिंसासङ्क्लेशयोः । शाठ्यादि ॥ [शुठ] उदिदयमित्येके ॥ [कुट्ठु लुठ आलस्ये च] चकाराद्गतिप्रतीघाते ॥ [रुठु] लुठमप्यन्येऽधीयते ॥ ३९ ॥

*कौशिकस्य मतम् । मुण्टति ॥

आलस्ये च । २२६. शुठु शोषणे । २२७. अठ २२८. रुठु गतौ ॥ (ठान्ताः ॥ १७ ॥) ॥

२२९. पुडु प्रमर्दने । २३०. मुडु खण्डने च । २३१. मडु भूषायाम् । २३२. गडु वदनैकदेशे । २३३. शौडृ गर्वे । २३४. यौडृ सम्बन्धे । २३५. मेडृ २३६. म्रेडृ २३७. म्लेडृ २३८. लोडृ २३९. लौडृ उन्मादे । २४०. रोडृ २४१. रौडृ २४२. तौडृ अनादरे । २४३. क्रीड विहारे । २४४. तुडृ २४५. तूडृ २४६. तोडृ तोडने । २४७. हुडृ २४८. हूडृ २४९. हूडृ २५०. होडृ गतौ । २५१. खोडृ प्रतीघाते । २५२. विड आक्रोशे । २५३. अड उद्यमे । २५४. लड विलासे । २५५. कडु मदे ।

अथ डान्ताश्चिशत्सेटश्च । [मुडु खण्डने च] चकारात्प्रमर्दने ॥ [गडु वदनैकदेशे] गण्डगतसंहननक्रियायामित्यर्थः ॥ [शौडृ] तालव्यादिः । ऋदित्वाण्णौ हे "उपान्त्यस्य०" [४, २, ३५] इति ह्रस्वाभावे, अशुशौडत् ॥ [यौडृ सम्बन्धे] सम्बन्धः श्लेषः ॥ [लोडृ] शौडादयो लोडृपर्यन्ता इत्यन्ये ॥ [तुडृ तूडृ तोडृ तोडने] तोडनं विदारणम् । दारणस्य हिंसाविशेषत्वात् 'हन्त्यर्थाश्च'ेति चुरादित्वे, तोडयति । संयुक्तडान्तोऽयमित्येके [तुड्डति] ॥ [खोडृ प्रतीघाते] गताविस्यनुवृत्तेर्गतिविषये प्रतीघाते । ऋदित्वाद् अचुखोडत् ॥ [लड विलासे] जिह्वोन्मन्थने घटादित्वाण्णौ ह्रस्वे लडयति । 'घुषेरविशब्दे' इति विशब्दप्रतिषेधाण्णिचोऽनित्यत्वे लडते ॥ [कडु मदे] कडमप्येकेऽत्र पठन्ति ।

२५६. कद्ड कार्कश्ये । २५७. अद्ड अभियोगे । २५८. चुद्ड हावकरणे । (डन्ता ॥१०॥) ॥

२५९. अण २६०. रण २६१. वण २६२. व्रण २६३. वण २६४. भण २६५. भ्रण २६६. मण २६७. धण २६८. ध्वण २६९ध्रण. २७०. कण २७१. क्वण २७२. चण शब्दे । २७३. ओणृ अपनयने । २७४. शोणृ वर्णगत्योः । २७५. श्रोणृ २७६. श्लोणृ सङ्घाते । २७७. पैण गतिप्रेरणश्लेषणेषु । (णान्ता ॥१९॥) ॥

स तु तुदादिपाठेनैव गतार्थ इति नेहाऽधीत ॥ [कद्ड] दोपान्त्योऽयम् । "तवर्गस्य०" [१, ३, ६०] इति दस्य डत्वे कड्डति । अन्ये तु डोपान्त्यमपु मन्यन्ते, तदा संयोगान्तलोपे कड् कट् । एवम्-'अद्ड'पि ॥ १० ॥

अथ णान्ता एकोनविंशतिः सेटश्च । शब्दः शब्दक्रिया । [वण "अनादेशादे०" (४, १, २४) इत्येत्वे, वेणतुः ] वेणुः । पवर्गतृतीयादित्वेन 'न शस-दद-वादि०" [ ४, १, ३० ] इति प्रतिषेधाभावः । [चण] इह च शब्दार्थत्वाऽविशेषेऽपि, रणितं नूपुरादौ । भणितं सुरतकूजिते । कणितमार्ते । क्वणितं वीणादौ रूढम् । एवमन्यत्राऽपि । कूजितं विहगादौ । बृंहितं गजे । हेषितं हये । वाशितं पशुषु । गर्जितं मेघादौ । गुञ्जितं सिंहादौ, इत्यादिकं लक्ष्यादभ्यूह्यम् ॥ [ओणृ] ऋदित्वाण्णौ हे "उपान्त्यस्य०" [४, २, ३५] इति ह्रस्वाभावे, मा भवान् ओणिणत् । ननु नित्यत्वादन्तरङ्गत्वाच्च द्वित्वे [कृते], उपान्त्याऽभावादेव ह्रस्वो न प्राप्नोतीति किमृदित्करणेन ? सत्यम्, इदमेव ऋदित्करणं ज्ञापकं नित्यमन्तरङ्गं च द्वित्वमुपान्त्यह्रस्वो बाधते । तेनाऽन्यत्राऽपि पूर्वं ह्रस्वः पश्चाद्द्वित्वम्, मा भवानटिटत् ॥ १९ ॥

२७८. चिति संज्ञाने । २७९. अत सातत्यगमने ।
२८०. च्युतृ आसेचने । २८१. चुतृ २८२. श्चुतृ २८३. श्च्युतृ क्षरणे । २८४ जुतृ भासने । २८५. अतु बन्धने ।
२८६. कित निवासे । २८७. ऋत घृणागतिस्पर्धेषु ॥ ( तान्ताः ॥ १० ॥ ) ॥

२८८. कुथु २८९. पुथु २९०. लुथु २९१. मथु २९२. मन्थ २९३. मान्थ हिंसासङ्क्लेशयोः ॥ (थान्ताः ॥६॥) ॥

२९४. खादृ भक्षणे । २९५. बद स्थैर्ये । २९६. खद हिंसायां च । २९७. गद व्यक्तायां वाचि । २९८.

अथ तान्ता दश [सेटश्च] । [चिति संज्ञाने] संज्ञानं संवित्तिः । चेत- [illegible] ॥ [अत सातत्यगमने] नियतगमने । [illegible] [च्युतृ आसेचने] [illegible] ॥ [श्चुतृ] [illegible] "[illegible]" [१, ३, ६१] इति [illegible] । [illegible] [१, ३, १८] इति [illegible] [illegible] [illegible] [४, ४, १२१] [illegible] [अतु बन्धने] [illegible] [२, १, ८८] [illegible] [कित निवासे । चाद्रूपम्] [illegible] [illegible] [१, ४, ६] इति । [illegible] ॥ १० ॥

थान्ताः षट् [सेटश्च] । [illegible] ॥ ६ ॥

× 'विलोडनेऽयमित्येके' इति पाठान्तरम् ॥

रद् विलेखने । २९९. णद ३००. ञिक्ष्विदा अव्यक्ते शब्दे । ३०१. अर्द गतियाचनयोः । ३०२. नर्द ३०३. णर्द ३०४. गर्द शब्दे । ३०५. तर्द हिंसायाम् । ३०६. कर्द कुत्सिते शब्दे । ३०७. खर्द दशने । ३०८. अदु बन्धने । ३०९. इदु परमैश्वर्ये । ३१०. बिदु अवयवे । ३११. णिदु कुत्सायाम् । ३१२. टुनदु समृद्धौ । ३१३. चदु दीप्त्याह्लादयोः । ३१४. त्रदु चेष्टायाम् । ३१५. कदु । ३१६. क्रदु । ३१७. क्लदु रोदनाह्वानयोः ३१८. क्लिदु परिदेवने । ३१९. स्कन्दृं गतिशोषणयोः ॥
(दान्ताः ॥ २६ ॥) ॥

३२०. षिधू गत्याम् । ३२१. षिधौ शास्त्रमाङ्गल्ययोः ।

अथ दान्ता, षड्विंशतिः [स्कन्दृवर्जाः सेटश्च] । [ञिक्ष्विदा] ञीत्वात् "ज्ञानेच्छा०" [५, २, ९२] इति सत्यर्थे क्तः । दान्तोऽयमित्येके [क्ष्वेडा] । अनुस्वारेदपि [क्ष्वेत्ता] ॥ [अर्द गतियाचनयोः । याचनस्थाने] यातनेत्येके [पठन्ति] ॥ [खर्द दशने] दन्दशूककर्तृके ॥ [इदु परमैश्वर्ये] परमेशनक्रियायाम् ॥ [बिदु अवयवे] अवयव एकदेशः । अनेन स्वगता क्रिया लक्ष्यते ॥ [टुनदु] ट्वित्वात् 'नन्दथु' ॥ [चदु दीप्त्याह्लादयो] आह्लाद [आह्लादनम्] आनन्दोत्पादनमित्यर्थः ॥ २६ ॥

अथ धान्ताश्च । [षिधौ शास्त्रमाङ्गल्ययोः] शास्त्रविषय शासनम् । मङ्गलविषया क्रिया । अनयोरेवार्थयोरयमौदित् । अर्थान्तरे तु, ऊदित्पूर्वक एव ऊदित्वाद्वेट् ॥ १ ॥

३२२. शुन्ध शुद्धौ ॥ (धान्ताः ॥ ३ ॥) ॥

३२३. स्तन ३२४. धन ३२५. ध्वन ३२६. चन ३२७. स्वन ३२८. वन शब्दे । ३२९. वन ३३०. पन भक्तौ । ३३१. कनै दीप्तिकान्तिगतिषु ॥ (नान्ताः ॥ ९ ॥) ॥

३३२. गुपौ रक्षणे । ३३३. तपं ३३४. धूप सन्तापे । ३३५. रप ३३६. लप ३३७. जल्प व्यक्ते वचने । ३३८. जप मानसे च । ३३९. चप सान्त्वने । ३४०. षप समवाये । ३४१. सृप्लं गतौ । ३४२. चुप मन्दायाम् । ३४३. तुप ३४४. तुम्प ३४५. त्रुप ३४६. त्रुम्प (पान्ताः ॥ १५ ॥) ३४७. तुफ ३४८. तुम्फ ३४९. त्रुफ ३५०. त्रुम्फ हिंसायाम् । ३५१. वर्फ ३५२. रफ ३५३. रफु (फान्ताः ॥ ७ ॥) ३५४. अर्व ३५५. कर्व ३५६. खर्व

---

अथ नान्ता नव सेटश्च । [वन पन भक्तौ] भक्तिर्भजनम् । वनिरर्थभेदात् पुनरिहाऽधीतः ॥ [कनै दीप्तिकान्तिगतिषु] दीप्तिः प्रकाशः । कान्तिः शोभा । ऐदित्वात् क्तयोर्नेट् [कान्तः] ॥ ९ ॥

अथ पान्ताः पञ्चदश, गुपौ वेट्, तपं सृप्लं अनिटौ, शेषाः सेटः । [जप मानसे च] मनोनिर्वर्त्ये वचने । [सृप्लं] लृदित्वादङि असृपत् ॥१५॥

अथ फान्ताः सप्त सेटश्च । [वर्फ रफ रफु] फान्तावयोऽपि हिंसायामिति काण्वः ॥ ७ ॥

३५७. गर्व ३५८. चर्व ३५९. तर्व ३६०. नर्व ३६१. पर्व ३६२. बर्व ३६३. शर्व ३६४. षर्व ३६५. सर्व ३६६. रिबु ३६७. रवु गतौ । ३६८. कुबु आच्छादने । ३६९. लुबु ३७०. तुबु अर्दने । ३७१. चुबु वक्त्रसंयोगे ॥(बान्ताः ॥१८॥)॥

३७२. सृभू ३७३. सृम्भू ३७४. स्रिभू ३७५. षिम्भू ३७६. भर्भ हिंसायाम् । ३७७. शुम्भ भाषणे च । ३७८. यर्भ ३७९. जभ मैथुने ॥ (भान्ताः ॥ ८ ॥) ॥

३८०. चमू ३८१. छमू ३८२. जमू ३८३. झमू ३८४. जिमू अदने । ३८५. क्रमू पादविक्षेपे । ३८६. यमूं उपरमे । ३८७. स्यमू शब्दे । ३८८. णमं प्रह्वत्वे । ३८९. षम ३९० ष्टम वैक्लव्ये । ३९१. अम शब्द-

अथ बान्ता अष्टादश सेटश्च । [रबु] अर्वेत्यादौ रेफस्थाने नकारं मन्यन्ते केचित्* ॥ [चुबु वक्त्रसंयोगे] वक्त्रेण सम्बन्धे । 'नमस्तुङ्गशिरश्चुम्बि' इत्युपचारात् ॥ १८ ॥

अथ भान्ता अष्टौ [यर्भवर्जाः सेटश्च] । आद्यास्त्रयो दन्त्याद्यास्तुर्यः षोपदेशः ॥ ॥ [शुम्भ भाषणे च] भासने चेत्यन्ये । सादृश्यादिः ॥ ८ ॥

अथ मान्ताः सप्तदश [यमूं-णमं-गम्लृंवर्जाः सेटश्च] । [क्रमू पादविक्षेपे] पादन्यासे ॥ [यमूं उपरमे] अनुस्वारेत् [रत्वाऽवेट्, यन्ता] । उपरमो निवृत्तिः ॥ [णमं प्रह्वत्वे] प्रह्वत्वं नम्रत्वम् ॥ [षम ष्टम वैक्लव्ये] वैक्लव्यं कातरत्वम् ॥

*केचित् पदेन कौशिकाः ज्ञेयाः ॥

भक्त्योः । ३९२. अम ३९३. द्रम ३९४. हम्म ३९५. मीमृ ३९६. गम्लृं गतौ ॥ (मान्ताः ॥१७॥) ॥

३९७. हय ३९८. हर्य क्लान्तौ च । ३९९. मव्य बन्धने । ४००. सूक्ष्यै ४०१. ईक्ष्यै ४०२. ईर्ष्यै ईर्ष्यार्थाः । ४०३. शुच्यै ४०४. चुच्यै अभिषवे ॥ (यान्ताः ॥ ८ ॥) ॥

४०५. त्सर छद्मगतौ ४०६. क्मर हूर्छने । ४०७. अभ्र ४०८. वभ्र ४०९. मभ्र गतौ । ४१०. चर भक्षणे च । ४११. धोरृ गतेश्चातुर्ये । ४१२. खोरृ प्रतीघाते ॥ (रान्ताः ॥ ८ ॥) ॥

४१३. दल ४१४. त्रिफला विशरणे । ४१५. मील

---

[अम शब्दभक्त्योः] भक्तिर्भजनम् ॥ [अम गतौ] अमेरर्थभेदाद् पुनः पाठः ॥ [मीमृ गतौ] मीमृ शब्देऽप्येके ॥ १७ ॥

अथ यान्ता अष्टौ [सेटश्च] । [सूक्ष्यै ईक्ष्यै ईर्ष्यै ईर्ष्यार्थाः] ईर्ष्या कामजमसहनम् ॥ [शुच्यै चुच्यै अभिषवे] द्रवेण द्रवाणां परिवासनमभिषवः । स्नानमिति चान्द्राः ॥ ८ ॥

अथ रान्ता अष्टौ [सेटश्च] । [त्सर छद्मगतौ] छद्मप्रकारे । तादिरयम् ॥ [क्मर हूर्छने] कौटिल्ये ॥ [धोरृ गतेश्चातुर्ये] ऋदित्वाश्च ह्रस्वः । व्यस्तनिर्देश वसरार्थः ॥ [खोरृ प्रतीघाते] गतेरित्यनुवृत्तेर्गतेः प्रतीघाते ॥ ८ ॥

अथ लान्ताश्चत्वारिंशत् सेटश्च । [त्रिफला] ञीत्वात् "ज्ञानेच्छार्चे॰" [५, २, ९२]ति वर्तमाने क्तः । आदित्वात् "नवा भावारम्भे" [४, ४, ७१]

४१६. इमील ४१७. स्मील ४१८. क्ष्मील निमेषणे। ४१९. पील प्रतिष्टम्भे। ४२०. णील वर्णे। ४२१. शील समाधौ। ४२२. कील बन्धे। ४२३. कूल आवरणे। ४२४. शूल रुजायाम्। ४२५. तूल निष्कर्षे। ४२६. पूल संघाते। ४२७. मूल प्रतिष्ठायाम्। ४२८. फल निष्पत्तौ। ४२९. फुल्ल विकसने। ४३०. चुल्ल हावकरणे। ४३१. चिल्ल शैथिल्ये च। ४३२. पेलृ ४३३. फेलृ ४३४. शेलृ ४३५. षेलृ ४३६. सेलृ ४३७. वेल्ह ४३८. सल ४३९. तिल ४४०. तिल्ल ४४१. पल्ल ४४२. वेल्ल गतौ। ४४३. वेलृ ४४४. चेलृ ४४५. केलृ ४४६. क्वेलृ ४४७. खेलृ ४४८. स्खल चलने। ४४९. खल संचये च। ४५०. ष्वल ४५१. ष्वल्ल आशु गतौ। ४५२. गल (लान्ताः ॥४०॥)

इति [फलोर्वा नेटि प्रफुल्लितमनेन प्रफुल्लमनेन प्रफुलितः प्रफुल्लः] ॥ [मील इमील स्मील क्ष्मील निमेषणे] निमेषणं सङ्कोचः ॥ [णील वर्णे] वर्णोपलक्षितायां क्रियायाम्, यथा-श्वेतं नीलति मरकतकान्त्या ॥ [शील समाधौ] समाधिरैकाग्र्यम् ॥ [तूल निष्कर्षे] निष्कर्षोऽन्तःस्थस्य बहिर्निःसारणम् ॥ [फल निष्पत्तौ] निष्पत्तिः सिद्धिः ॥ [चुल्ल हावकरणे] मैथुनेच्छाप्रेरित- हावकरणम् ॥ [गल] अनेकार्थत्वाद् स्रवणेऽप्ययम्। बहुलमेतन्नि- ति गलिण् स्रावणे ॥ ४० ॥

२५३. नर्द अर्दने । २५४. पुर्व २५५. पर्व २५६. मर्व पूरणे । २५७. मर्व २५८. भवु २५९. शव गतौ ॥ २६०. कर्व २६१. खर्व २६२. गर्व दर्पे । २६३. क्षिवू २६४. ष्ठिवू निरसने । २६५. जीव प्राणधारणे । २६६. पीव २६७. मीव २६८. तीव २६९. नीव स्थौल्ये । २७०. उर्वै २७१. तुर्वै २७२. थुर्वै २७३. दुर्वै २७४. धुर्वै २७५. जुर्वै २७६. अर्व २७७. भर्व २७८. शर्व हिंसायाम् । २७९. मुर्वै २८०. मव बन्धने । २८१. गुर्वै उद्यमे । २८२. पिवु २८३. मिवु २८४. निवु सेचने । २८५. हिवु २८६. दिवु २८७. जिवु प्रीणने । २८८. इवु व्याप्तौ च । २८९. अव रक्षण—गति—कान्ति—प्रीति-तृप्त्यवगमन-प्रवेश—श्रवण-स्वाम्यर्थ-याचन-क्रियेच्छा-

दीप्त्यवाप्त्यालिङ्गन—हिंसा—दहन—भाव—वृद्धिषु ॥ (वान्ताः ॥ ३७ ॥) ॥

४९०. कश शब्दे। ४९१. मिश ४९२. मश रोषे च। ४९३. शश प्लुतिगतौ। ४९४. णिश समाधौ। ४९५. दृशृं प्रेक्षणे। ४९६. दंशं दशने ॥ (शान्ताः ॥७॥) ॥

४९७. घुषृ शब्दे। ४९८. चूष पाने। ४९९. तूष तुष्टौ। ५००. पूष वृद्धौ। ५०१. लुष ५०२. मूष स्तेये। ५०३. पूष प्रसवे। ५०४. ऊष रुजायाम्। ५०५. ईष उञ्छे। ५०६. कृषं विलेखने। ५०७. कष ५०८. शिष ५०९. जष ५१०. झष ५११. वष ५१२. मष ५१३. मुष ५१४. रुष ५१५. रिष ५१६. यूष ५१७. जूष ५१८. शष ५१९. चष हिंसायाम्। ५२०. वृषू संघाते च। ५२१. भष भर्त्सने। ५२२. जिषू ५२३. विषू ५२४. मिषू ५२५. निषू ५२६. पृषू ५२७. वृषू सेचने। ५२८.

---

अथ शान्ता. सप्त, आद्याः पञ्च सेटश्च। [कश शब्दे] सौत्रोऽयमिति केचित् ॥ [मिश मश रोषे च] शब्दने रोषक्रियायां चेत्यर्थः ॥ [शश प्लुतिगतौ] प्लुतिर्निर्गमने उत्प्लुत्य गमने इत्यर्थः ॥ [दंशं दशने] दशनं दन्तकर्म ॥७॥

अथ षान्ता एकचत्वारिंशत् इत्येकत्रिंशः सेटः। [पूष प्रसवे] ताळव्या-दिरयमिति व्याख्याः ॥ [ईष उञ्छे] उञ्छमुच्चयनम् ॥ [कृषं विलेखने] विलेखनं हलोत्कर्षणम् ॥ [भष भर्त्सने] भाषणं कुत्सितशब्दकरणम् ॥१॥

मृषू सहने च। ५२९. उषू ५३०. श्रिषू ५३१. श्लिषू ५३२. प्रुषू ५३३. प्लुषू दाहे। ५३४. घृषू संहर्षे। ५३५. हृषू अलीके। ५३६. पुष पुष्टौ। ५३७. भूष (षान्ताः ॥७१॥) ५३८. तसु अलंकारे। ५३९. तुस ५४०. ह्रस ५४१. ह्लस ५४२. रस शब्दे। ५४३. लस श्लेषणक्रीडनयोः। ५४४. घस्लृं अदने। ५४५. हसें हसने। ५४६. पिस्तृ ५४७ पेस्तृ ५४८. वेस्तृ गतौ। ५४९. शसू हिंसायाम्। ५५० शंसू स्तुतौ च ॥ (सान्ताः ॥ १३ ॥) ॥

५५१. मिहं सेचने। ५५२. दहं भस्मीकरणे। ५५३. चह कल्कने। ५५४. रह त्यागे। ५५५. रहु गतौ। ५५६. दृह ५५७. दृहु ५५८. बृह वृद्धौ। ५५९. बृह ५६०. बृहु शब्दे च। ५६१. उहृ ५६२. तुहृ ५६३. दुहृ अर्दने। ५६४. अर्ह ५६५. मह पूजायाम्॥ (हान्ताः ॥१५॥)॥

---

अथ सान्तास्त्रयोदश सेटश्च घस्लृवर्जाः ॥

हान्ताः पञ्चदश मिहंदहंवर्जाः सेटश्च। [चह कल्कने] कल्कनं शाठ्यम् ॥ ×[अर्ह मह पूजायाम्। "व्यञ्जनाद्घञ्" (५, ३, १३२) इति घञि] "न्यङ्क्वादि०" [४, १, ११२]ति घे [च अर्हन्ति तेनेति] अर्घो मूल्यं पूजाद्रव्यं च। अर्विर्धात्वन्तरं च सौत्रम् [अर्घः]। [अर्हण् पूजायाम्।

---

×अर्हधातोः "सुगिद्वषार्हः सत्रिशत्रुस्तुत्ये" [५, २, २६] इत्यतृशि, त्रिलोक्यभ्यर्चनप्रकर्षमर्हतीति 'अर्हन्' ॥

५६६. उक्ष सेचने । ५६७. रक्ष पालने । ५६८. मक्ष ५६९. मुक्ष संघाते । ५७०. अक्षौ व्याप्तौ च । ५७१. तक्षौ ५७२. त्वक्षौ तनूकरणे । ५७३. णिक्ष चुम्बने । ५७४. तृक्ष ५७५. स्तृक्ष ५७६. णक्ष गतौ । ५७७. वक्ष रोषे । ५७८. त्वक्ष त्वचने । ५७९. सूर्क्षे अनादरे । ५८०. काक्षु ५८१. वाक्षु ५८२. माक्षु काङ्क्षायाम् । ५८३. द्राक्षु ५८४. ध्राक्षु ५८५. ध्वाक्षु घोरवासिते च ॥ (क्षान्ताः ॥२०॥) ॥

॥ [इति] परस्मैभाषा ॥

---

अर्हयति] अयमर्थविशेषे पूजायामेव चुरादिरिति पूजाया अन्यत्र योग्यत्वादौ न णिच् [अर्हति] । इह च पूजायां पाठात् पूजायामपि णिजभावः ॥ १५ ॥

अथ क्षान्ता विंशतिः सेटश्च । क्षान्तानां षान्तेषु पाठो युक्तो वैचित्र्यार्थं त्विह कृत. । [मक्ष] रोषेऽयमित्येके ॥ [तक्षौ त्वक्षौ तनूकरणे] तनूकरण कार्श्यम् । "तक्षः स्वार्थे वा" [३, ४, ७७] इति श्नु, तक्ष्णोति तक्षति । स्वार्थः पाठापेक्षया तनूकरणम् । इदमेव ज्ञापक 'धातवोऽनेकार्था' इति ॥ [णिक्ष चुम्बने] चुम्बनं वक्त्रसंयोगः ॥ [स्तृक्ष] षोपदेशोऽयमिति चन्द्रः ॥ [वक्ष रोषे] संघाते इत्येके ॥ [त्वक्ष त्वचने] त्वचन त्वग्ग्रहण संवरणं वा ॥ [सूर्क्षे] यान्तोऽयमित्यन्ये [सूर्क्ष्यति] ॥ [द्राक्षु ध्राक्षु ध्वाक्षु घोरवाशिते च] चकारात् काङ्क्षायाम् ॥

एते निरनुबन्धत्वात् "शेषात् परस्मै" [३, ३, १००] इति कर्त्तरि परस्मैपदिनः ॥

# [ ॥ अथ आत्मनेपदिनः ॥ ]

५८६. गांङ् गतौ ॥ [आदन्तः ॥१॥] ॥ ५८७. ष्मिङ् ईषद्धसने ॥ [इदन्तः ॥ १ ॥] ॥ ५८८. डीङ् विहायसां गतौ ॥ [ईदन्तः] (॥१॥) ॥

५८९. उंङ् ५९०. कुंङ् ५९१. गुंङ् ५९२. घुंङ् ५९३. ङुंङ् शब्दे । ५९४. च्युंङ् ५९५. ज्युंङ् ५९६. जुंङ् ५९७. प्रुंङ् ५९८. प्लुंङ् गतौ । ५९९. रुंङ् रेषणे च ॥ [उदन्ताः] (॥११॥) ॥

६००. पूङ् पवने । ६०१. मूङ् बन्धने ॥ [ऊदन्तौ] ॥२॥ ॥

६०२. धृंङ् अविध्वंसने ॥ [ऋदन्तः ॥१॥] ॥

---

अथ ङित आत्मनेपदिन आ ईक्षेर्वर्णसमाम्नायक्रमेण वक्ष्यन्ते ॥

[गांङ् गतौ] ङित्वादात्मनेपदम् । एकद्विबहुषु गाते, जगे जगाते जगिरे । अनुस्वारेत्त्वादनिट्, गाता । 'कै गै रै शब्दे' गायति ॥ [ष्मिङ्] "षः सो०" [२, ३, ९८] इति षस्य सत्वे, स्मयते । षोपदेशत्वात् "नाम्यन्तस्था०" [२, ३, १५] इति षत्वे, सिष्मिये ॥

अथ उकारान्ता एकादश अनिटश्च । [उंङ्] 'धातोरिवर्णोवर्णस्येयुव्' इति स्याद्यन्तरङ्गादीर्घत्वाभावादुवादेशे, ऊवे ॥ [रुंङ् रेषणे च] रेषणं हिंसा-शब्दः ॥ ११ ॥

ऊदन्तौ द्वौ सेटौ च । [पूङ् पवने] पवनं नीरजीकरणम् ॥ २ ॥

[ऋदन्त' सेट् । धृंङ् अविध्वंसने] उभयपदिषु पठिष्यमाणस्याऽप्य-स्याऽविध्वंसने धरतीति प्रयोगनिवृत्त्यर्थं इह पाठः ॥ १ ॥

६०३. मेंङ् प्रतिदाने । ६०४. देंङ् [एदन्तौ ॥२॥]
६०५. त्रैंङ् पालने । ६०६. श्यैंङ् गतौ । ६०७. प्यैंङ् वृद्धौ ॥ [ऐदन्ता] (॥३॥) ॥

६०८. वकुङ् कौटिल्ये । ६०९. मकुङ् मण्डने । ६१०. अकुङ् लक्षणे । ६११. शीकृङ् सेचने । ६१२. लोकृङ् दर्शने । ६१३. श्लोकृङ् संघाते । ६१४. द्रेकृङ् ६१५. ध्रेकृङ् शब्दोत्साहे । ६१६. रेकृङ् ६१७. शकुङ् शङ्कायाम् । ६१८. ककि लौल्ये । ६१९. कुकि ६२०. वृकि आदाने । ६२१. चकि तृप्तिप्रतीघातयोः । ६२२. ककुङ् ६२३. श्वकुङ् ६२४. त्रकुङ् ६२५. श्रकुङ् ६२६. श्लकुङ् ६२७. ढौकृङ् ६२८. त्रौकृङ् ६२९. ष्वष्कि ६३०. वस्कि ६३१. मस्कि ६३२. तिकि ६३३. टिकि ६३४. टीकृङ् ६३५. सेकृङ् ६३६. स्रेकृङ् (कान्ताः ॥२९॥)

अथ एदन्तौ द्वावनिटौ च। [मेंङ् प्रतिदाने] प्रतिदानं प्रत्यर्पणम् ॥२॥
अथ ऐदन्तास्त्रयोऽनिटश्च ॥ ३ ॥
अथ कान्ता एकान्नत्रिंशत् सेटश्च । [वकुङ् कौटिल्ये] गतावपीत्येके ॥ [अकुङ् लक्षणे । गतावप्येके] लक्षणं चिह्नम् ॥ [श्लोकृङ् सङ्घाते] सङ्घातः [सं]हननं संहन्यमानश्च ॥ [द्रेकृङ् ध्रेकृङ् शब्दोत्साहे] शब्दस्योत्साह औद्धत्यं [वृ]द्धिश्च ॥ [रेकृङ् शकुङ् शङ्कायाम्] शङ्का सन्देहः पूर्वस्यार्थः, द्वितीयस्य [त्रा]सश्च ॥ [ककि लौल्ये] लौल्यं गर्धश्चापलं च ॥ २९ ॥

६३७. रघुङ् ६३८. लघुङ् गतौ । ६३९. अघुङ् ६४०. वघुङ् गत्याक्षेपे । ६४१. मघुङ् कैतवे च । ६४२. राघृङ् ६४३. लाघृङ् सामर्थ्ये । ६४४. द्राघृङ् आयासे च । ६४५. श्लाघृङ् कत्थने ॥ [घान्ताः] (॥९॥) ॥

६४६. लोचृङ् दर्शने । ६४७. षचि सेचने । ६४८. शचि व्यक्तायां वाचि । ६४९. कचि वन्धने । ६५०. कचृङ् दीप्तौ च । ६५१. श्वचि ६५२. श्वचुङ् गतौ । ६५३. वर्चि दीप्तौ । ६५४. मचि ६५५. मुचुङ् कल्कने । ६५६. मचुङ् ×पूजनोच्छ्रायधारणेषु च । ६५७. पचुङ् व्यक्तीकरणे । ६५८. ष्टुचि प्रसादे ॥ (चान्ताः ॥१३॥) ॥

६५९. एजृङ् ६६०. भ्रेजृङ् ६६१. भ्राजि दीप्तौ । ६६२. इजुङ् गतौ ६६३. ईजि कुत्सने च । ६६४. ऋजि

अथ घान्ता नव सेटश्च । [लघुङ्] लङ्घिर्भोजननिवृत्त्यर्थोऽपि ॥ [अघुङ् वघुङ् गत्याक्षेपे] गतेराक्षेपो वेग आरम्भ उपलम्भो* वा ॥ [श्लाघृङ् कत्थने] कत्थनमुत्कर्षाख्यानम् ॥ ९ ॥

[अथ चान्तास्त्रयोदश सेटश्च । षचि सेचने] सेचनं सेवनं भजनमिति यावत् ॥ [मचि मुचुङ् कल्कने] कल्कनं दम्भः शाठ्यं कथनं च ॥ १३ ॥

अथ जान्ता नव [सेटश्च] । [भ्राजि] "भजसृज०" [२, १, ८७] इत्यत्र राजिसहचरितस्यैव भ्राजेर्ग्रहणाद् [अस्य परवाभावे] यङ्लुपि, बाभ्राक्ति ।

×अत्र 'धारणोच्छ्रायपूजनेषु च' इत्यानुपूर्विकोऽपि पाठः ॥
*'उपालम्भो वा' इत्यपि पाठः ॥

गतिस्थानार्जनोर्जनेषु । ६६५. ऋजुङ् ६६६. भृजैङ् भर्जने । ६६७. तिजि क्षमानिशानयोः ॥ (जान्ता॰ ॥९॥)॥

६६८. घट्टि चलने । ६६९. स्फुटि विकसने । ६७०. चेष्टि चेष्टायाम् ६७१. गोष्टि ६७२. लोष्टि संघाते । ६७३. वेष्टि वेष्टने । ६७४. अट्टि हिंसातिक्रमयोः ॥ (टान्ता ॥७॥) ॥

६७५. एठि ६७६. हेठि विबाधायाम् । ६७७. मठुङ् ६७८. कठुङ् शोके । ६७९. मुठुङ् पलायने । ६८०. वठुङ् एकचर्यायाम् । ६८१. अठुङ् [ठान्ता ॥७॥] ६८२. पडुङ् गतौ । ६८३. हुडुङ् ६८४. पिडुङ् संघाते । ६८५. शडुङ् रुजायां च । ६८६. तडुङ् ताडने । ६८७. कडुङ् मदे । ६८८. खडुङ् मन्थे । ६८९. खुडुङ्

---

अत एव एत्वद्वित्वाभावविकल्पोऽपि तस्यैव, [भ्रेजे बभ्राजे] । इदमेव च [भ्राजेरात्मनेपदिनोऽप्युभयपदिषु] टुभ्राजि [दीप्ताविति पाठे] प्रयोजनम् ॥ [ऋजि गतिस्थानार्जनोर्जनेषु] ऊर्जन प्राणनम् ॥ [ऋजुङ् भृजैङ् भर्जने] भर्जन प्राकप्रकार. ।' [तिजि क्षमानिशानयो] निशान तीक्ष्णीकरणम् ॥९॥

अथ टान्ता. सप्त सेटश्च । [चेष्टि चेष्टायाम् ] चेष्टेहा ॥ [वेष्टि वेष्टने] वेष्टन मन्थनम् [लोटन परिहाणिश्च] ॥ [अट्टि हिंसातिक्रमयो ] अतिक्रम उल्लङ्घनम् । दोपान्त्योऽयम् ॥ ७ ॥

अथ ठान्ता सप्त सेटश्च । [मठुङ् कठुङ् शोके] शोकोऽध्यानम् ॥ [वठुङ् एकचर्यायाम् ] एकस्याऽसहायस्य चर्या गतिस्तस्याम् ॥ ७ ॥

गतिवैकल्ये । ६९० कुडुङ् दाहे । ६९१. वडुङ् ६९२. मडुङ् वेष्टने । ६९३. भडुङ् परिभाषणे । ६९४. मुडुङ् मज्जने । ६९५. तुडुङ् तोडने । ६९६. भुडुङ् वरणे । ६९७. चडुङ् कोपे । ६९८. द्राडृङ् ६९९. ध्राडृङ् विशरणे । ७००. शाडृङ् श्लाघायाम् । ७०१. वाडृङ् आप्लाव्ये । ७०२. हेडृङ् ७०३. होडृङ् अनादरे । ७०४. हिडुङ् गतौ च ॥ (डान्ताः ॥२३॥) ॥

७०५. घिणुङ् ७०६. घुणुङ् ७०७. घृणुङ् ग्रहणे । ७०८. घुणि ७०९. घूर्णिभ्रमणे । ७१०. पणि व्यवहारस्तुत्योः ॥ (णान्ता. ॥६॥) ॥

७११. यतैङ् प्रयत्ने । ७१२. युतृङ् ७१३ जुतृङ्

---

अथ डान्तास्त्रयोविंशतिः सेटश्च । [ वडुङ् मडुङ् वेष्टने ] विभाजनेऽप्यन्ये ॥ [ मुडुङ् मज्जने ] मज्जन शोधन न्यग्भावश्च ॥ [ तुडुङ् तोडने ] तोडन हिंसा ॥ [ भुडुङ् वरणे ] वरण स्वीकरणम् ॥ [ वाडृङ् आप्लाव्ये ] आप्लाव्यमाप्लावनम् ॥ २३ ॥

अथ णान्ताः षट् सेटश्च । [पणि] "गुपौ धूप०" [३, ४, १] इत्याये, पणायति । आयान्तस्येदित्त्वाभावात् "शेषात् परस्मै" [३, ३, १००] इति [परस्मैपदम्] ॥ ६ ॥

[ अथ तान्तास्त्रयः सेटश्च । जुतृङ् भासने ] कौशिकस्तु ज्योतिःसिद्धये जुतिस्थाने ज्युतिमधीते । तदसद्, "द्युतेरादेश्च ज" [९९१ उणा०] इति सिद्धत्वात् ॥ ३ ॥

**भासने** ॥ (तान्ताः ॥३॥) ॥

७१४. त्रिथृङ् ७१५. वेथृङ् याचने। ७१६
उपतापैश्वर्याशीःषु च । ७१७. श्रथुङ् शैथिल्ये
ग्रथुङ कौटिल्ये। ७१९. कत्थि श्लाघायाम्॥ (थान्
७२०. श्विदुङ् श्वैत्ये । ७२१. वदुङ् स्तु
दनयोः । ७२२. भदुङ् सुखकल्याणयोः ।
मदुङ् स्तुति–मोद्–मद्–स्वप्न–गतिपु । ७२४

अथ थान्ता षट् सेटश्च । [नाथृङ् उपतापैश्वर्याशी षु च
उपताप उपघातः । अत्र याच्ञोपतापौ क्रियात्वादर्थावैश्वर्याशिषौ
त्वाद् द्योत्ये । यद्वा गण्डति श्वेतते प्रासादः, घण्टा ध्वनति, सधु
समवैतीति द्रव्यगुणसंयोगसत्तासमवायानामिव सिद्धानामप्यात्य
साध्यतया प्रतीते-[रनयो]-रर्थत्वमप्यस्तु । यदाह-पूर्वापरीभूत भ
माऽऽचष्टे । सर्पिषो नाथते, सर्पिर्नाथते, सर्पिर्मे भूयादित्याशास्ते
कौटिल्ये] कौटिल्यं कुसृतिर्बन्धश्च ॥ [कत्थि श्लाघायाम
गुणारोपः ॥ ६ ॥

अथ दान्ता एकविंशतिः [हस्विवर्जाः सेटश्च] । [श्विदुङ् श्वै
[श्वेतगुण] क्रिया । श्विन्दते । कोऽर्थः ? यदि सकर्मकस्तदा श्वेतीकरो
ऽकर्मकस्तदा श्वेतीभवति ॥ [वदुङ स्तुत्यभिवादनयोः] गुणैः प्रश
अभिवादनं पादयोः प्रणिपातः ॥ [भदुङ् सुखकल्याणयोः] सुखं
दयाद्युभानुभवनम् । कल्याण श्रेयः । ×प्रीतावप्यन्ये ॥ [मदुङ्
मदस्वप्नगतिषु] स्वप्नेनाऽऽहस्तमपि स्वद्यते । मोदमदस्वप्नेष्वकर्म

×प्रीतिर्मोहनीयविपाकः ॥

किंचिच्चलने । ७२५. क्लिदुङ् परिदेवने । ७२६. मुदि हर्षे । ७२७. ददि दाने । ७२८. हर्दि पुरीषोत्सर्गे । ७२९. ष्वदि ७३०. स्वर्दि ७३१ स्वादि आस्वादने । ७३२. उर्दि मानक्रीडनयोश्च× । ७३३. कुर्दि ७३४. गुर्दि ७३५. गुदि+ क्रीडायाम् । ७३६. पूदि क्षरणे । ७३७. ह्लादि शब्दे । ७३८. ह्लादैङ् सुखे च । ७३९. पर्दि कुत्सिते शब्दे । ७४०. स्कुदुङ् आप्रवणे ॥

(दान्ता. ॥ २१ ॥) ॥

७४१. एधि वृद्धौ ७४२. स्पर्धि संघर्षे । ७४३. गाधृङ् प्रतिष्ठा–लिप्सा–ग्रन्थेषु । ७४४. बाधृङ् रोटने ।

---

गत्योः सकर्मकः ॥ [क्लिदुङ् परिदेवने] परिदेवनं शोचनम् । णित्त्वमकृत्वो-भयत्र पाठस्तु फलवत्यपि कर्त्तरि परस्मैपदार्थः । अफलेऽप्यात्मनेपदार्थश्च ॥ [गुर्दि] गुर्दिस्थानेऽन्ये खुर्दि पेठुः [खूर्दते] ॥ [गुदि] गुदिस्थाने गुधिमेके [अध्यैषत्] ॥ [पूदि क्षरणे] क्षरण निरसनम् ॥ [पर्दि कुत्सिते शब्दे] पायुध्वनौ । अन्ये तु निःशब्दमधोवातं पर्दनं मन्वाना अशब्दे इत्याहुः ॥ [स्कुदुङ् आप्रवणे] आप्रवणमुत्प्लुत्य गमनमास्कन्दनं वा । उद्धरणमित्यन्ये ॥२१॥

अथ धान्ताः सप्त [सेटश्च] । [स्पर्धि संघर्षे] संघर्षः पराभिभवेच्छा । सनि 'पिस्पर्धिषते' । अकर्मकः ॥ [गाधृङ् प्रतिष्ठालिप्साग्रन्थेषु] प्रतिष्ठाऽऽ-

---

×अत्र 'मानक्रीडयोश्च' इति पाठान्तरम् ॥

+क्वचित् गुदिस्थाने 'गर्दि' इत्यपि पाठः ॥

**भासने** ॥ (तान्ताः ॥३॥) ॥

**७१४. विथृङ् ७१५. वेथृङ् याचने। ७१६. नाथृङ् उपतापैश्वर्याशीःषु च। ७१७. श्रथुङ् शैथिल्ये। ७१८. ग्रथुङ कौटिल्ये। ७१९. कत्थि श्लाघायाम्॥** (थान्ताः ॥६॥) ॥

**७२०. श्विदुङ् श्वैत्ये। ७२१. वदुङ् स्तुत्यभिवादनयोः। ७२२. भदुङ् सुखकल्याणयोः। ७२३. मदुङ् स्तुति–मोद–मद–स्वप्न–गतिषु। ७२४. स्पदुङ्**

अथ थान्ता षट् सेटश्च। [नाथृङ् उपतापैश्वर्याशीःषु च। चाद्याचने] उपताप उपघातः। अत्र याच्ञोपतापौ क्रियात्वादर्थावैश्वर्याशिषौ तु धर्ममात्रत्वाद् धात्वर्थे। यद्वा गच्छति श्वेतते प्रासादः, घण्टा ध्वनति, संयुज्यते, अस्ति, समवैतीति द्रव्यगुणसंयोगसत्तासमवायानामिव सिद्धानामप्याख्यातवाच्यत्वेन साध्यतया प्रतीते–[रनयो]–र्धात्वर्थत्वमप्यस्तु। यदाह–पूर्वापरीभूतं भावमाख्यातेनाऽऽचष्टे। सर्पिषो नाथते, सर्पिर्नाथते, सर्पिर्मे भूयादित्याशास्ते॥ [ग्रथुङ् कौटिल्ये] कौटिल्यं कुसृतिर्बन्धश्च॥ [कत्थि श्लाघायाम्] श्लाघा गुणारोपः॥ ६॥

अथ दान्ता एकविंशतिः [ह्रदिवर्जाः सेटश्च]। [श्विदुङ् श्वैत्ये] श्वैत्यं [श्वेतगुण] क्रिया। श्विन्दते। कोऽर्थः? यदि सकर्मकस्तदा श्वेतीकरोति। अथाऽकर्मकस्तदा श्वेतीभवति॥ [वदुङ् स्तुत्यभिवादनयोः] गुणैः प्रशंसा स्तुतिः। अभिवादनं पादयोः प्रणिपातः॥ [भदुङ् सुखकल्याणयोः] सुखं सद्वेद्यकर्मोदयात्सुखमनुभवनम्। कल्याणं श्रेयः। ×प्रीतावप्यन्ये॥ [मदुङ् स्तुतिमोदमदस्वप्नगतिषु] स्वप्नेनाऽऽलस्यमपि लक्ष्यते। मोदमदस्वप्नेष्वकर्मकः, स्तुति·

×प्रीतिर्मोहनीयविपाकः॥

किंचिच्चलने । ७२५. क्लिदुङ् परिदेवने । ७२६. मुदि हर्षे । ७२७. ददि दाने । ७२८. हर्दि पुरीषोत्सर्गे । ७२९. ष्वदि ७३०. स्वर्दि ७३१ स्वादि आस्वादने । ७३२. उर्दि मानक्रीडनयोश्च× । ७३३. कुर्दि ७३४. गुर्दि ७३५. गुदि+ क्रीडायाम् । ७३६. पूदि क्षरणे । ७३७. ह्रादि शब्दे । ७३८. ह्लादैङ् सुखे च । ७३९. पर्दि कुत्सिते शब्दे । ७४०. स्कुदुङ् आप्रवणे ॥

(दान्ताः ॥ २१ ॥) ॥

७४१. एधि वृद्धौ ७४२. स्पर्धि संघर्षे । ७४३. गाधृङ् प्रतिष्ठा–लिप्सा–ग्रन्थेषु । ७४४. बाधृङ् रोटने ।

गत्योः सकर्मकः ॥ [क्लिदुङ् परिदेवने] परिदेवन शोचनम् । नित्यमङ्गत्वो- भयत्र पाठस्तु फलवत्यपि कर्तरि परस्मैपदार्थं । अफलेऽप्यात्मनेपदार्थश्च ॥ [गुर्दि] गुर्दिस्थानेऽन्ये खुर्दि पेठुः [खूर्दते] ॥ [गुदि] गुदिस्थाने गुधिमेके [अध्यैपन्] ॥ [पूदि क्षरणे] क्षरण निरसनम् ॥ [पर्दि कुत्सिते शब्दे] पायुध्वनौ । अन्ये तु निःशब्दमधोवातं पर्दनं मन्वाना अशब्दे इत्याहुः ॥ [स्कुदुङ् आप्रवणे] आप्रवणमुत्प्लुत्य गमनमास्कन्दनं वा । उद्धरणमित्यन्ये ॥२१॥

अथ धान्ताः सप्त [सेटश्च] । [स्पर्धि संघर्षे] संघर्षः पराभिभवेच्छा । सनि 'पिस्पर्धिषते' । अकर्मकः ॥ [गाधृङ् प्रतिष्ठालिप्साग्रन्थेषु] प्रतिष्ठाऽऽ-

×अत्र मानक्रीडयोश्च' इति पाठान्तरम् ॥

+क्वचित् गुदिस्थाने 'गर्दि' इत्यपि पाठः ॥

७४५. दधि धारणे। ७४६. वधि वन्धने। ७४७. नाधृङ् नाथृङ्वत् ॥ (धान्ता ॥७॥) ॥

७४८. पनि स्तुतौ। ७४९. मानि पूजायाम् ॥ (नान्तौ ॥२॥) ॥

७५०. तिपृङ् ७५१. ष्टिपृङ् ७५२. ष्टेपृङ् क्षरणे। ७५३. तेपृङ् कम्पने च। ७५४. टुवेपृङ् ७५५. केपृङ् ७५६. गेपृङ् ७५७. कपुङ् चलने। ७५८. ग्लेपृङ् दैन्ये च। ७५९. मेपृङ् ७६०. रेपृङ् ७६१. लेपृङ् गतौ। ७६२. त्रपौषि लज्जायाम्। ७६३. गुपि गोपन-कुत्सनयोः ॥ (पान्ता ॥१४॥) ॥

---

स्पदम्। लब्धुमिच्छा लिप्सा। ग्रन्थन ग्रन्थ.। प्रतिष्ठायामकर्मकोऽय लिप्सा-ग्रन्थयो सकर्मक॰॥ [धाधृङ् रोटने] रोटन प्रतिघात ॥ [नाधृङ् नाथृङ्वत्] उपतापैश्वर्याशीर्याच्ञासु [अर्थेषु नाथृङ्वदय वर्त्तते] लाघवार्थमेव निर्देश। वर्णक्रमानुसरणात्तु नैकत्र पठितौ ॥ ७ ॥

[अथ नान्तौ द्वौ सेटौ च। मानि पूजायाम्] विचारे "शान्दान्॰" [३, ४, ७] इति [सनि, पूर्वस्येतो दीर्घे च, मीमासते धर्मम्। "शसि प्रत्ययात्" (५, ३, १०५) इत्य, 'मीमासा' ॥ २ ॥]

अथ पान्ताश्चतुर्दश [सेटश्च]। [टुवेपृङ्] ट्वित्वात्, वेपथु। [त्रपौषि लज्जायाम्] षित्वादङि त्रपा ॥ १४ ॥

७६४. अबुङ् ७६५. रबुङ् शब्दे । ७६६. लबुङ् अवस्रंसने च । ७६७. कबृङ् वर्णे । ७६८. क्लीबृङ् आधार्ष्ट्ये । ७६९. क्षीबृङ् मदे ॥ (बान्ताः ॥६॥ ) ॥

७७०. शीभृङ् ७७१. चीभृङ् ७७२. शल्भि कत्थने । ७७३. वल्भि भोजने । ७७४. गल्भि धार्ष्ट्ये । ७७५. रेभृङ् ७७६. अभृङ् ७७७. रभुङ् ७७८. लभुङ् शब्दे । ७७९. ष्टभुङ् ७८०. स्कभुङ् ७८१. ष्टुभूङ् स्तम्भे । ७८२. जभुङ् ७८३. जभैङ् ७८४. जृभुङ् गात्रविनामे । ७८५. रभि राभस्ये । ७८६. डुलभिष् प्राप्तौ ॥ (भान्ता ॥१७॥)॥

७८७. भामि क्रोधे । ७८८. क्षमौषि सहने ।

---

अथ बान्ताः षट् [सेटश्च । लबुङ्] लम्बते, प्रलम्बते, अवलम्बते, आलम्बते, उल्लम्बते, विलम्बते ※इत्यनेकार्थत्वमन्यत्राप्युपसर्गयोगेऽप्युदाहार्यम् ॥ [कबृङ् वर्णे] वर्णो वर्णनं शुक्लादिश्च ॥ ६ ॥

अथ भान्ताः सप्तदश [रभिलभिवर्जाः सेटश्च । ष्टभुङ स्तम्भे] स्तम्भः क्रियानिरोधः । टपरः षकारोऽयमित्येके [विष्टम्भयते] । विष्टम्पते इतितु स्तम्नातेः ॥ [रभि राभस्ये] राभस्यं कार्योपक्रमः ॥ [डुलभिष्] अनुस्वारेत्वाल्लब्धा । [ड्वित्वात् त्रिमक् [लब्धिमम्] षित्वादङि ["रभ" (४-४-१०३) इति ने "नो व्यञ्जनस्य०" (४. २. ४५) इति नलुकि] लभा ॥ १७ ॥

※'इत्यनेकार्थत्वमुपसर्गयोगेऽपि तत्रान्यत्राप्युदाहार्यम्' इत्येव पाठान्तरोऽत्र ॥

७८९. कमूङ् कान्तौ ॥ (मान्ता ॥१॥) ॥

७९०. अयि ७९१. वयि ७९२. पयि ७९३. मयि ७९४. नयि ७९५ चयि ,७९६ रयि गतौ। ७९७. तयि ७९८. णयि रक्षणे च। ७९९. दयि दान-गति-हिंसा-दहनेषु च। ८००. ऊयैङ् तन्तुसन्ताने। ८०१. पूयैङ् दुर्गन्धविशरणयोः। ८०२. क्नूयैङ् शब्दोन्दनयोः। ८०३. क्ष्मायैङ् विधूनने। ८०४. स्फायैङ् ८०५. ओप्यायैङ् वृद्धौ। ८०६. तायृङ् सन्तानपालनयोः ॥ (यान्ता ॥१७॥) ॥

८०७. वलि ८०८. वल्लि संवरणे। ८०९. शलि चलने च। ८१०. मलि ८११. मल्लि धारणे। ८१२. भलि ८१३. भल्लि परिभाषणहिंसादानेषु। ८१४. कलि शब्द-संख्यानयोः। ८१५. कल्लि अशब्दे ॥ (लान्ता ॥९॥) ॥

---

अथ मान्ताश्चय [सेटश्च। कमूङ् कान्तौ] कान्तिरभिलाष ॥१॥

अथ यान्ता सप्तदश [सेटश्च। क्नूयैङ् शब्दोन्दनयो] उन्दन क्लेदनम् ॥ दुर्ग-धेऽपीत्येके ॥ [तायृङ् सन्तानपालनयो] सन्तान. प्रबन्ध। ऋदित्वाद् ङ न ह्रस्व [अततायत्] ॥ १७ ॥

अथ लान्ता नव [सेटश्च। वलि संवरणे] दन्त्योष्ठ्यादिरयम्। ज्वलादौ [बल प्राणनधान्यावरोधयोरिति] स्वोष्ठ्यादि। [वलण प्राणने] घटादिश्चेत्येके [वलयति] ॥ [कल्लि अशब्दे] शब्दस्याऽभावोऽशब्द तूष्णीम्भाव। शब्दार्थोऽयमित्येके। अव्यक्तशब्दार्थ इत्यपरे ॥ ९ ॥

८१६. तेवृङ् ८१७. देवृङ् देवने । ८१८. षेवृङ् ८१९. सेवृङ् ८२०. केवृङ् ८२१. खेवृङ् ८२२. गेवृङ् ८२३. ग्लेवृङ् ८२४. पेवृङ् ८२५. प्लेवृङ् ८२६. मेवृङ् ८२७. म्लेवृङ् सेवने । ८२८. रेवृङ् ८२९. पवि गतौ ॥

(वान्ताः ॥१४॥) ॥

८३०. काशृङ् दीप्तौ । ८३१. क्लेशि विबाधने ॥

( शान्तौ ॥२॥ ) ॥

८३२. भाषि च व्यक्तायां वाचि । ८३३. ईषि गतिहिंसादर्शनेषु । ८३४. गेषृङ् अन्विच्छायाम् । ८३५. येषृङ् प्रयत्ने । ८३६. जेषृङ् ८३७. णेषृङ् ८३८. एषृङ् ८३९. ह्रेषृङ् गतौ । ८४०. रेषृङ् ८४१. हेषृङ् अव्यक्ते-शब्दे । ८४२. पर्षि स्नेहने । ८४३. घुषुङ् कान्तीकरणे ॥

(षान्ताः ॥१२॥) ॥

---

अथ वान्ताश्चतुर्दश । सर्वे ऋदित· [सेटश्च । ऋदित्त्व] ङपरे णौ [उपान्त्य] ह्रस्वाभावार्थम् ॥ [रेवृङ् पवि गतौ । रेवृङ्] प्लुतिगतावित्यन्ये ॥१४॥

अथ षान्ता द्वादश [सेटश्च । भाषि च व्यक्तायां वाचि] प्रकृतेः परश्चकारः प्रकृतिमनुकर्षति । तेन क्लेशिर्भाषिश्च व्यक्तायां वाचि ॥ [गेषृङ् अन्विच्छायाम्] अन्विच्छाऽन्वेषणम् ॥ १२ ॥

८४४. स्रंसूङ् प्रमादे । ८४५. कास्टङ् शब्दकुत्सायाम् । ८४६. भासि ८४७. टुभ्रासि ८४८. टुभ्लासृङ् दीप्तौ । ८४९. रासृङ् ८५०. णासृङ् शब्दे । ८५१. णसि कौटिल्ये । ८५२. भ्यसि भये । ८५३. आङः शसुङ् इच्छायाम् । ८५४. ग्रसूङ् ८५५. ग्लसूङ् अदने । ८५६. घसुङ् करणे ॥ (सान्ताः ॥१३॥) ॥

८५७. ईहि चेष्टायाम् । ८५८. अहुङ् ८५९. प्लिहि गतौ । ८६०. गर्दि ८६१. गल्हि कुत्सने । ८६२. वर्हि ८६३. वल्हि प्राधान्ये । ८६४. बर्हि ८६५. बल्हि परिभाषणहिंसाच्छादनेषु । ८६६. वेहृङ् ८६७. जेहृङ् ८६८. वाहृङ् प्रयत्ने । ८६९. द्राहृङ् निक्षेपे । ८७०.

अथ सान्तास्त्रयोदश [सेटश्च । स्रंसूङ् प्रमादे] दन्त्यादिः । प्रमादोऽवक्षेपः ॥ [कास्टङ् शब्दकुत्सायाम्] शब्दस्य कुत्सा रोगः ॥ [टुभ्रासि टुभ्लासृङ्] द्विरवाद् [अथौ] भ्रासथुः, भ्लासथुः ॥ [आङः शसुङ्] "आङ" [४, ४, १२०] इति आङः पर एवायं प्रयुज्यते । नान्योपसर्गोऽपि केवल इति ज्ञापनार्थम् ॥ १३ ॥

अथ हान्ता अष्टादश [सेटश्च । वर्हि वल्हि] दानेऽप्यन्ये । ओष्ठ्यादी एतौ, पूर्वौ तु दन्त्योष्ठ्यादी ॥ [द्राहृङ् निक्षेपे] निद्राक्षेपे इत्येके ॥

ऊहि ×तर्के । ८७१. गाहौङ् विलोडने । ८७२. ग्लहौङ् ग्रहणे । ८७३. वहुङ् ८७४. महुङ् वृद्धौ ॥ (हान्ताः ॥१८॥) ॥

८७५. दक्षि शैघ्र्ये च । ८७६. धुक्षि ८७७. धिक्षि सन्दीपनक्लेशनजीवनेषु । ८७८. वृक्षि वरणे । ८७९. शिक्षि विद्योपादाने । ८८०. भिक्षि याच्ञायाम् । ८८१. दीक्षि मौण्ड्येज्योपनयननियमव्रतादेशेषु । ८८२. ईक्षि दर्शने ॥ (क्षान्ताः ॥८॥) ॥

॥ [इति] आत्मनेभाषाः ॥

[ऊहि तर्कें] तर्क उत्प्रेक्षा ॥ [गाहौङ् विलोडने] विलोडनं परिमन्थनम् ॥
[ग्लहौङ् । अयं] गृहौङ् इत्येके [गर्हते] ॥ १८ ॥
अथ क्षान्ता अष्टौ सेटश्च । एषां च षान्तेषु पाठो युक्तो वैचित्र्यार्थं
त्विह कृतः ॥ [दक्षि शैघ्र्ये च] शैघ्र्यं शीघ्रता । [चाद्वृद्धौ] ॥ दीक्षि]
मौण्ड्येज्योपनयननियमव्रतादेशेषु] मौण्ड्यं वपनम् । इज्या यजनम् ।
उपनयनं मौञ्जीबन्धः । नियमः संयमः । व्रतादेशः संस्कारादेशः । दीक्षते ।
केचित्तु दीक्षि मौण्ड्ये ज्योपनयनादौ चेति [सूत्रपाठं] भिन्दन्ति । ज्यवते ।
जीर्णः ॥ ८ ॥



×वितर्के इत्यपि पाठोऽत्र ॥

# [॥ अथ उभयपदिनः ॥]

८८३. श्रिग् सेवायाम् ॥ (इदन्तः ॥१॥) ॥ ८८४. णींग् प्रापणे ॥ (ईदन्त. ॥१॥) ॥ ८८५. हृंग् हरणे । ८८६. भृंग् भरणे । ८८७. धृंग् धारणे । ८८८. डुकृंग् करणे ॥ (ऋदन्ताः ॥४॥) ॥

८८९. हिकी अव्यक्ते शब्दे ॥ (कान्तः ॥१॥) ॥ ८९० अञ्चूग् गतौ च । ८९१. डुयाचृग् याच्ञायाम् । ८९२. डुपचींष् पाके ॥ (चान्ताः ॥३॥) ॥

---

अथोभयपदिनो स्लर्क्षों यावद् वर्णक्रमेण—

[श्रिग् सेवायाम्] गित्वात् फलवत् कर्तरि "ईगित" [३. ३. ९५] इत्यात्मनेपदम् । अन्यत्र च "शेषात्०" [३, ३, १००] इति परस्मै [पदम्] । एवं सर्वत्र ॥

[हृंग्] हरति [' रथं] सकर्मकोऽकर्मकश्च । उपसर्गवशादनेकार्थश्च ॥ [धृंग् धारणे] 'धृंङ्त् स्थाने' ध्रियते । चुरादेराकृतिगणत्वाद् धारयति ॥ [डुकृंग्] "कृग् तनादेः" [३, ४, ८३] कुरुते करोति । तनादिषु पाठमकृत्वाऽस्याऽत्र पाठः "तन्भ्यो वा" [४, ३, ६८] इति सिचो लुग्विकल्पाभावार्थः । [तेन अकृत अकृथाः इत्यत्र "धुड्ह्रस्वात्०" (४, ३, ७०) इति नित्यमेव सिज्लुक् भवति] शबर्थश्च, तेन करते करति [इत्यत्र "कर्तर्यनद्भ्य०" (३, ४, ७१)] इति शबपि भवति ॥ ४ ॥

[अथ चान्ताख्यस्तत्राद्यो सेटावन्त्योऽनिट् । अञ्चूग् गतौ च । भयम्] अचूग् [गतावि-] त्येके । अचुग् [गतौ] इति केचित् ॥ [१] ॥

८९३. राजृग् ८९४. टुभ्राजि दीप्तौ । ८९५. भजीं सेवायाम् । ८९६. रञ्जीं रागे ॥ (जान्ताः ॥४॥) ॥

८९७. रेटृग् परिभाषण–याचनयोः ॥ (टान्तः ॥१॥)॥ ८९८. वेणृग् गति–ज्ञान–चिन्ता–निशामन–वादित्र-ग्रहणेषु ॥ (णान्तः ॥१॥) ॥, ८९९. चतेग् याचने ॥ (तान्त ॥१॥) ॥ ९००. प्रोथृग् पर्याप्तौ । ९०१. मिथृग् मेधाहिंसयोः । ९०२. मेथृग् सङ्गमे च ॥ (

९०३. चदेग् याचने । ९०४. ऊबुन्दृग् निशामन

णिदृग् ९०६. णेदृग् कुत्सासन्निकर्षयोः । ९०७.

९०८. मेदृग मेधाहिंसयोः ॥ (दान्ता ॥६॥) ॥ ९०९.

सङ्गमे च । ९१०. शृधूग् ९११. मृधूग् उन्दे । ९१२. बु

शोधने ॥ (धान्ता. ॥४॥) ॥ ९१३. खनूग् अवदारणे । ९१४.

दानी अवखण्डने । ९१५. शानी तेजने ॥ (नान्ताः ॥३॥) ॥

[टुभ्राजि] भ्राजेरात्मनेपदिनोऽपि पुनरिह पाठो राजृसाहचर्यार्थः । तेन "यजसृज०" [२, १, ८७] इत्यत्राऽस्य [ग्रहणात्] षत्वे, वाभ्राडि । यद्येव परस्मैपद विकल्प्यताम्, किमर्थः पुनः पाठः ? । सत्यम्, आत्मनेपदाऽव्यभिचारोपदर्शनद्वाराऽन्येषां यथादर्शनमात्मनेपदाऽनित्यत्वज्ञापनार्थः । तेन लभते लभति सेवते सेवतीत्यादि ॥ [४] ॥

[प्रोथृग् पर्याप्तौ । पर्याप्तिः] पूर्णता ॥ [ऊबुन्दृग् निशामने] निशामनमालोचनम् ॥ [शृधूग् मृधूग उन्दे] उन्दः क्लेदनम् ॥

९१६. शपीं आक्रोशे ॥ (पान्तः ॥१॥) ॥ ९१७. चायृग् पूजानिशामनयोः । ९१८. व्ययी गतौ ॥ ( यान्तौ ॥२॥) ॥ ९१९. अली भूषणपर्याप्तिवारणेषु ॥ ( लान्तः ॥१॥ ) ॥ ९२०. धावूग् गतिशुद्धयोः । ९२१. चीवृग् झपीवत् ॥ ( वान्तौ ॥२॥ ) ॥ ९२२. दाशृग् दाने ॥ (शान्तः ॥१॥) ॥ ९२३. झषी आदानसंवरणयोः । ९२४. भेषृग् भये । ९२५. भ्रेषृग् चलने च। ९२६. पषी बाधनस्पर्शनयोः । ९२७. लषी कान्तौ । ९२८. चषी भक्षणे । ९२९. छषी हिंसायाम् । ९३०. त्विषीं दीप्तौ । ९३१. अषी (षान्ताः ॥९॥) ९३२. असी गत्यादानयोश्च । ९३३. दासृग् दाने ॥ ( सान्तौ ॥२॥ ) ॥

९३४. माहृग् माने । ९३५. गुहौग् संवरणे ॥ (हान्तौ ॥२॥) ॥ ९३६. भ्लक्षी भक्षणे ॥ ( क्षान्तः ॥१॥) ॥

॥ [इति] उभयतो भाषाः ॥

---

[शपीं आक्रोशे] आक्रोशो विरुद्धानुध्यानम् ॥ [१] ॥ [चीवृग् झपीवत्] आदानसंवरणयोः । [झषी आदानसंवरणयोर्यस्यते तद्वदयमपीत्यर्थः] ॥ [२] ॥ [पषी बाधनस्पर्शनयोः] स्पर्शनं ग्रन्थनम् ॥ [लषी कान्तौ] कान्तिरिच्छा ॥ [९] ॥ [माहृग् माने] मानं परिमाणम् ॥ [२] ॥ [भ्लक्षी भक्षणे] अयं भक्षीत्यन्ये ॥ [१] ॥



# [॥ अथ द्युतादयः ॥]

९३७. द्युति दीप्तौ ॥ (तान्तः ॥१॥) ॥ ९३८. रुचि अभिप्रीत्यां च ॥ (चान्तः ॥१॥) ॥ ९३९. घुटि परिवर्त्तने । ९४०. रुटि ९४१. लुटि (टान्ताः ॥३॥) ९४२. लुठि प्रतीघाते ॥ (ठान्तः ॥१॥) ॥

९४३. श्विताङ् वर्णे ॥ (तान्तः ॥१॥) ॥ ९४४. ञिमिदाङ् स्नेहने । ९४५. ञिक्ष्विदाङ् ९४६. ञिष्विदाङ् मोचने च ॥ (दान्ताः ॥३॥) ॥

९४७. शुभि दीप्तौ । ९४८. क्षुभि संचलने । ९४९. णभि ९५०. तुभि हिंसायाम् । ९५१. स्रम्भूङ् विश्वासे ॥ (भान्ताः ॥५॥) ॥

---

॥ अथ द्युतादयः 'कृपौङ् सामर्थ्ये', पर्यन्ता आत्मनेपदिनः ॥

[द्युति दीप्तौ] पूर्वाचार्यानुवर्तनेन द्युतेः पूर्वं पाठः ॥ [रुचि अभिप्रीत्यां च] चकाराद्दीप्तौ । अभिप्रीतिरभिलाषः ॥ [रुटि लुटि लुठि प्रतीघाते] आद्यो दीप्तावित्यन्ये ॥ [श्विताङ्] आदित्वात् क्तयोर्नेट् [श्वितः श्वित्तवान्] ॥ [ञिमिदाङ् स्नेहने] स्नेहनं स्नेहयोगः । ञीत्वात् "ज्ञानेच्छा०" [५. २. ९२] इति [वर्तमाने] क्तः [मिन्नः] ॥ [क्षुभि संचलने] संचलनं रूपान्यथात्वम् ॥ [स्रम्भूङ्] दन्त्यादिः ॥

**९५२. भ्रंशूङ्** ( शान्तः ॥१॥ ) **९५३. स्रंसूङ् अवस्रंसने । ९५४. ध्वंसूङ् गतौ च** ॥ ( सान्तौ ॥२॥ ) ॥

**९५५. वृतूङ् वर्त्तने** ॥ ( तान्तः ॥१॥ ) ॥ **९५६. स्यन्दौङ् स्रवणे** ॥ ( दान्तः ॥१॥ ) ॥ **९५७. वृधूङ् वृद्धौ । ९५८. शृधूङ् शब्दकुत्सायाम्** ॥ ( धान्तौ ॥२॥ ) ॥ **९५९. कृपौङ् सामर्थ्ये** ॥ ( पान्तः ॥१॥ ) ॥

॥ वृत् द्युतादयः ॥ २३ ॥ आत्मनेपदिनः ॥

॥ अथ द्युतादेरन्तर्गणो वृतादिः पञ्चकः ॥

[वृतूङ् वर्तने] वर्तनं स्थितिः । द्युताद्यङिx अवृतत् ॥ [स्यन्दौङ् स्रवणे] स्यन्दते, सस्यन्दे । यङि [सास्यद्यते । यङ्लुपि] सास्यन्दीति [सास्यन्ति] । "निरभ्यनोश्च" [२. ३. ५०] इति [वा षत्वे] निःष्यन्दते निःस्यन्दते ॥ [शृधूङ् शब्दकुत्सायाम् । तालव्यादिः । शब्दकुत्सा] पायुशब्दत्वात् ॥

वृत् वर्तनम् । [वृत्] द्युतादिः २३, वृतादि (५) श्चान्तर्गणौ वर्त्तितौ समाप्ताविलर्थः । वृधेः क्विपि वृत्, वर्धितौ पूर्णावित्येके ॥



x अत्र "लृदिद्द्युतादिपुष्यादेः परस्मै" [३. ४. ६४] इति सूत्रेणाऽङ् संज्ञात इति ॥

# [॥ अथ ज्वलादयः ॥]

९६०. ज्वल दीप्तौ ॥१॥ ९६१. कुच सम्पर्चन–कौटिल्य–प्रतिष्टम्भ–विलेखनेषु ॥ [चान्तः ॥१॥] ॥ ९६२. पत्लृ [तान्तः] (॥१॥) ९६३. पथे गतौ । ९६४. कथे निष्पाके । ९६५. मथे विलोडने ॥ (थान्ताः ॥३॥) ॥ ९६६. षद्लृं विशरणगत्यवसादनेषु । ९६७. शद्लृं शातने ॥ (दान्तौ ॥२॥) ॥ ९६८. बुध अवगमने ॥ [धान्तः] (॥१॥) ॥ ९६९. टुवमू उद्गिरणे । ९७०. भ्रमू चलने ॥ (मान्तौ ॥२॥) ॥ ९७१. क्षर संचलने ॥ [रान्तः] (॥१॥) ॥

९७२. चल कम्पने । ९७३. जल घात्ये । ९७४. टल ९७५. ट्वल वैक्लव्ये । ९७६. ष्ठल स्थाने ।

---

अथ ज्वलादयो यजादेः प्राक् षट्त्रिंशत्—

षद्लृं–शद्लृं–बुधं–रुहं–रमिवर्जाः सेटः वर्णक्रमेण निर्दिश्यन्ते । तत्रापि पूर्वाचार्यानुरोधेन पूर्वं 'ज्वल' [इति] ॥ [कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु] सम्पर्चनं मिश्रता । प्रतिष्टम्भो रोधनम् । विलेखनं कर्षणम् ॥ [षद्लृं विशरणगत्यवसादनेषु] विदारणं शटनम् । अवसादोऽनुत्साहः ॥ [शद्लृं शातने] शातनं तनूकरणम् ॥ [बुध अवगमने] अवगमनं ज्ञानम् ॥ [टुवमू उद्गिरणे] उद्गिरणं भुक्तस्योर्ध्वगतिः । टुवित्वाद् वमथुः ॥ [क्षर संचलने] सकर्मकोऽकर्मकश्चायम् । क्षरति गौः, पयो मुञ्चतीत्यर्थः । क्षरति जलं स्रवतीत्यर्थः ॥ [जल घात्ये] घात्यं जडत्वमतैक्ष्ण्यमित्यर्थः ॥ [टल ट्वल वैक्लव्ये] विक्लव एव वैक्लव्यम् ॥

१७७. हल विलेखने । १७८. णल गन्धे । १७९. बल प्राणनधान्यावरोधयोः । १८०. पुल महत्त्वे । १८१. कुल बन्धु-संस्त्यानयोः । १८२. पल १८३. फल १८४. शल गतौ । १८५. हुल हिंसा-संवरणयोश्च ॥ (लान्ताः ॥१४॥) ॥

१८६. क्रुशं आह्वानरोदनयोः ॥ (शान्तः ॥१॥) ॥ १८७. कस गतौ ॥ [सान्तः] ॥१॥ ॥ १८८. रुहं जन्मनि ॥ [हान्तः] ॥१॥ ॥ ॥ परस्मै भाषाः ॥

१८९. रमिं क्रीडायाम् ॥ १ ॥ १९०. षहि मर्षणे ॥

॥ आत्मने भाषौ ॥

वृत् ज्वलादिः ॥ २१ ॥

[हल विलेखने] विलेखनं कर्षणम् ॥ [णल गन्धे] गन्धोऽर्दनम् ॥ [बल प्राणनधान्यावरोधयोः] प्राणनं जीवनम् । धान्यमवरुध्यते यत्रेति धान्यावरोधः कुशूलः । ओष्ठ्यादिः ॥ [कुल बन्धुसंस्त्यानयोः] संस्त्यानं सङ्घातः ॥१४॥ [रुह जन्मनि] बीजजन्मनीत्येके । सद्याङ्कुरोत्पत्तिः । णौ "रुहः प" [४. २. १४] इति वा पादेशे, रोपयति रोहयति ॥

[अथात्मनेपदिनौ । षहि मर्षणे] मर्षणं क्षमा ॥

॥ ज्वलादयो वृत्ताः समाप्ता इत्यर्थः ॥

# [अथ यजादयः]

९९१. यजीं देवपूजासंगतिकरणदानेषु ॥ १ ॥ ९९२. वेंग् तन्तुसन्ताने । ९९३. व्येंग् संवरणे । ९९४. ह्वेंग् स्पर्द्धाशब्दयोः ॥ (एदन्ताः ॥३॥) ॥

९९५. डुवपीं बीजसन्ताने ॥ (पान्तः ॥१॥) ॥ ९९६. वहीं प्रापणे ॥ [हान्तः] (॥१॥) ॥

॥ उभयतो भाषाः ॥

९९७. ट्वोश्वि गतिवृध्योः ॥ १ ॥ ९९८. वद व्यक्तायां वाचि ॥ १ ॥ ९९९. वसं निवासे ॥ १ ॥

॥ परस्मै भाषाः ॥

वृत् यजादिः ॥ ९ ॥

---

अथ यजादयो नव—

[श्विदद्यजां अनिट्श्च] वर्णक्रमेण [दर्श्यन्ते । तथापि] पूर्वाचार्यानुरोधे-
[व्येंग् संवरणे] संवरणमाच्छादनम् ॥
नादौ 'यजीं' [इति] ॥ [डुवपीं बीजसन्ताने] बीजानां सन्तानः क्षेत्रे विस्तारणम् । द्वित्वात्
त्रिमकि डुप्त्रिमम् ॥ [९] ॥



# [अथ घटादयः]

१०००. घटिष् चेष्टायाम् ॥ १ ॥ १००१. क्षजुङ् गतिदानयोः ॥ [जान्त] (॥ १ ॥)॥ १००२. व्यथिष् भयचलनयोः । १००३. प्रथिष् प्रख्याने ॥ (थान्तौ ॥ २ ॥) ॥ १००४. म्रदिष् मर्दने । १००५. स्खदिष् खदने । १००६. कदुङ् १००७. क्रदुङ् १००८. क्लदुङ् वैक्लव्ये ॥ ( दान्ताः ॥ ५ ॥ ) ॥ १००९. क्रपि कृपायाम् ॥ [पान्तः] (॥ १ ॥) ॥ १०१०. ञित्वरिष् सम्भ्रमे ॥ [रान्तः] (॥ १ ॥) ॥ १०११. प्रसिष् विस्तारे ॥ [सान्तः] (॥ १ ॥)॥ १०१२. दक्षि हिंसागत्योः ॥ [क्षान्तः] (॥ १ ॥)॥

॥ आत्मने भाषाः ॥

---

॥ अथ घटादयो वर्णक्रमेणाऽऽख्यादिसमासैर्वक्ष्यन्ते–

तत्र घटे. एवं निर्देशः पूर्वाचार्यप्रसिद्धेः । [घटिष् चेष्टायाम्] चेष्टा ईहा । इह घटादीनामनेकार्थत्वेऽपि पठितार्थेष्वेव घटादिकार्यविज्ञानम् । विघटयतीति स्वजन्तस्याऽन्तस्य वा ["णिज् बहुल नाम्न०" (३. ४. ४२) इति करोत्यर्थे] णिचि रूपम् । इह घटादौ केऽप्यत्रैवाऽधीताः प्रकृत्यादिकार्यभाजो ण्यायपशात्प्रत्ययाश्च । अन्ये तु स्वस्थानोक्तकार्यभाजः पित्वद्वत्वाद्यर्थमनूद्यन्ते इति यथायथमुत्प्रेक्ष्यम् ॥

[व्यथिष् भयचलनयोः] दुःखेऽप्यन्ये ॥ [प्रथिष् प्रख्याने] प्रख्यानं प्रसिद्धिः । षित्वादङि प्रथा ॥ [स्खदिष् खदने] खदनं विदारणम् ॥ [कदुङ् क्रदुङ् क्लदुङ् वैक्लव्ये] विक्लवः कातरस्तस्य भावः कर्म वा वैक्लव्यम् । वैकल्ये इति चन्द्रः ॥ [प्रसिष् विस्तारे] प्रसवे इत्यन्ये ॥

१०१३. श्रां पाके ॥१॥ १०१४. स्मृं आध्याने ॥१॥ १०१५. दॄ भये १०१६. नॄ नये ॥२॥

१०१७. ष्टक १०१८. स्तक प्रतीघाते । १०१९. चक तृप्तौ च । १०२० अक कुटिलायां गतौ ॥ (कान्ताः ॥४॥) ॥ १०२१. कखे हसने ॥१॥ १०२२. अग अकवत् । १०२३. रगे शङ्कायाम् । १०२४. लगे सङ्गे । १०२५. ह्रगे १०२६. ह्लगे १०२७. षगे १०२८. सगे १०२९. ष्ठगे १०३०. स्थगे संवरणे ॥ (गान्ताः ॥९॥) ॥

१०३१. वट १०३२. भट परिभाषणे । १०३३. णट नतौ ॥ (टान्ताः ॥३॥) ॥ १०३४. गड सेचने । १०३५. हेड वेष्टने । १०३६. लड जिह्वोन्मन्थने ॥ (डान्ताः ॥३॥) ॥

---

[श्रां पाके] 'श्रै पाके' 'श्रांक् पाके' इत्यस्य चेह घटादिकार्यार्थं पाठः । 'श्रायति श्राति वा श्रायति श्राति वा कश्चित्, तमन्यः प्रयुङ्क्ते श्रपयति । अत एव ज्ञापकादनेकार्थत्वं धातूनां सिद्धम् ॥ [स्मृं आध्याने] हविः स्वयमेव । अन्यप्रोक्तस्याऽर्थविशेषे घटादिकार्यार्थमिह पाठः ॥ [नॄ नये] क्र्यादेर्घटादिकार्यार्थं विरलोऽस्य पाठः ॥ आध्यानमुत्कण्ठा । आध्यानादन्यत्र चित्तं स्मारयति । [ह्रगे ह्लगे षगे सगे ष्ठगे स्थगे संवरणे] [संवरणमाच्छादनम् । एदित्वाद् "व्यञ्जनादे०" [४. ३. ४७] रिति वा वृद्धेः ["नश्विजागृशसक्षणह्म्येदितः" (४. ३. ४९) इति प्रतिषेधे 'अह्गीत्' इत्यादि । णौ घटादित्वाद् ह्रगयति] ॥ [णट नतौ] नृतौ तु नाटयति ॥ [लड जिह्वोन्मन्थने] जिह्वोन्मन्थनयोरित्येके । तन्मतसंग्रहार्थं [जिह्वा च] जिह्वाविषया क्रिया, उन्मन्थनं चेति समाहारोऽपि ॥

१०३७. फण १०३८. कण १०३९. रण गतौ । १०४०. चण हिंसादानयोश्च । १०४१. शण १०४२. श्रण दाने ॥ (णान्ताः ॥६॥) ॥ १०४३. स्नथ १०४४. क्नथ १०४५. क्रथ १०४६. क्लथ हिंसार्थाः ॥ [थान्ताः] (॥४॥) ॥

१०४७. छद ऊर्जने। १०४८. मदै हर्षग्लपनयोः ॥ (दान्तौ ॥२॥) ॥ १०४९. ष्टन १०५०. स्तन १०५१. ध्वन शब्दे । १०५२. स्वन अवतंसने । १०५३. चन हिंसायाम् ॥ (नान्ताः ॥५॥) ॥ १०५४. ज्वर रोगे ॥ १ ॥ १०५५. चल कम्पने। १०५६. ह्वल १०५७. ह्मल चलने १०५८. ज्वल दीप्तौ च ॥ (लान्ताः ॥४॥) ॥ परस्मै भाषाः ॥

इत्याचार्यश्रीहेमचन्द्रानुस्मृता भ्वादयो निरनुबन्धा धातवः ॥ छ ॥

---

[छद ऊर्जने] ऊर्जनं प्राणन बलं च ॥ [मदै हर्षग्लपनयोः] 'मदैच् हर्षे' इत्ययमनयोरर्थयोर्घटादिकार्यार्थमिह पठितः ॥ [ज्वल दीप्तौ च] चकाराच्चलने । [ज्वलादौ पठितोऽप्ययं घटादिकार्यार्थमिहाधीत.] । केचित्तु दलि-वलि-स्खलि-क्षपि-त्रपीणामपि घटादित्वमिच्छन्ति ॥

॥ औत्सर्गिकशविकरणो निरनुबन्धो भूवादिगणः सम्पूर्णः ॥

# [॥ अथ अदादयः ॥]

१. अदं २. प्सांक् भक्षणे । ३. भांक् दीप्तौ । ४. यांक् प्रापणे । ५. वांक् गतिगन्धनयोः । ६. ष्णांक् शौचे । ७. श्रांक् पाके । ८. द्रांक् कुत्सितगतौ । ९. पांक् रक्षणे । १०. लांक् आदाने । ११. रांक् दाने । १२. दांवक् लवने । १३. ख्यांक् प्रथने । १४. प्रांक् पूरणे । १५. मांक् माने ॥ (आदन्ताः ॥१४॥) ॥

## [अथ अदादयः]

[अदं प्सांक् भक्षणे] अथेहाऽविकरणेषु धातुषु वर्णक्रमेण पठितव्येषु पूर्वाचार्यप्रसिद्धमनुसरणेनाऽदेगदाद्युपन्यासः । त्रिस्वरणमदादिज्ञापनार्थं सर्वत्र ज्ञेयम् । "कर्त्तर्यनद्भ्यः शव्" [३, ४, ७१] इत्यदादिवर्जनात् [शवभावे] अत्ति ॥

अथाऽऽदन्ताश्चतुर्दशाऽनिटश्च । [श्रांक् पाके] श्राति पच्यते स्वयमेवेत्यर्थः ॥ [द्रांक कुत्सितगतौ] कुत्सिता गतिः पलायनं स्वापश्च× ॥ [दांवक्-लवने] वकारो "अवौ दाधौ दा" [३. ३. ५] इति विशेषणार्थ. ॥ [ख्यांक् प्रथने] प्रकथने इत्यन्ये ॥ [मांक् माने] मान वर्तनम् । माति पात्रे ॥ १४ ॥

×अत्र 'स्वपश्च' इत्यपि पाठः ॥

पाँचों वीर अपूर्व चमत्कार तथा ... संग्राम हैं तथा
इन वीरोंका सनातनधर्म एवं ... रक्षा एवं होता है। पाम
हुआ। जिसमें श्रीगोगाजी एवं ... के योग, कर एक-दू
मजूवीर वीरगतिको प्राप्त हुए ... गोगाजीने कृतकृत्य एव
मन्त्र, प्रभाव एवं प्रेरणासे

१६. इंक् स्मरणे । १७. इंणक् गतौ ॥(इदन्तौ ॥२॥) ॥
१८. वींक् प्रजनकान्त्यसनखादनेषु च ॥ (ईदन्त. ॥१॥) ॥
१९. युंक् अभिगमे । २०. पुंक् प्रसवैश्वर्ययोः ।
२१. तुंक् ×वृत्तिहिंसापूरणेषु । २२. युक् मिश्रणे ।
२३. णुक् स्तुतौ । २४. क्ष्णुक् तेजने । २५. स्नुक्
प्रस्नवने। २६. टुक्षु २७. रु २८. कुक् शब्दे ॥(उदन्ताः ॥१०॥)॥
२९. रुदृक् अश्रुविमोचने । ३०. ञिष्वपंक् शये ।
३१. अन ३२. श्वसक् प्राणने । ३३. जक्षक् भक्षहस-
नयोः ॥ [रुदादि] (॥५॥) ॥ ३४. दरिद्राक् दुर्गतौ । ३५.

[इंणक गतौ] णित्वमिण्फ इत्यादौ विशेषणार्थम् ॥ [२] ॥
[स्नुक् प्रस्नवने] प्रस्नवनं क्षरणम् ॥ [उदन्ताः] १० ॥
अथाऽन्तर्गणो रुदादिपञ्चकः । [रुदृक्] "रुपञ्चकात्०" [४, ४, ८८] इति [इटि] रोदिति ॥ [अन श्वसक् प्राणने] प्राणन जीवनम् । वर्णक्रमस्य प्रतिज्ञानात् स्वपः प्राणनेर्निर्देशे प्राप्ते लाघवार्थमिह पाठः । [श्वस] साळश्यादिदेन्त्यान्त्यः ॥ [जक्षक्] अयं रुपञ्चकस्य पञ्चमो जक्षपञ्चकस्य त्वाद्य इत्युभयकार्यभाक् ॥

×अत्र 'वृत्ति' इति स्थाने 'प्रवृत्ति' इति पाठान्तरम् ॥
फ"उपसर्गस्याऽनिणेधेदोति" [१, २, १९] इत्यत्र इणो वर्जनादुपसर्गावर्णस्य लगभावे, उप एति उपैति ॥ "इणः" [२, १, ५१] "इणिकोर्गाः" [४, ४, २३], इणोऽभ्रेषे" [५, १, ७५] इति सूत्रेषु णित्वप्रयोजनमूह्यम् ॥

जागृक् निद्राक्षये । ३६. चकासृक् दीप्तौ । ३७. शासूक् अनुशिष्टौ ॥ [जक्षादि] ॥ ५ ॥ ॥

३८. वचंक् भाषणे ॥ १ ॥ ३९. मृजौक् शुद्धौ ॥ १ ॥ ४०. सस्तुक् स्वप्ने ॥ १ ॥ ४१. विदक् ज्ञाने ॥ १ ॥ ४२. हनंक् हिंसागत्योः ॥ १ ॥ ४३. वशक् कान्तौ ॥ १ ॥ ४४. असक् भुवि । ४५. षसक् स्वप्ने ॥ २ ॥ यङ्लुप् च ॥

॥ परस्मै भाषाः ॥

४६. इंक् अध्ययने ॥ १ ॥ ४७. शीङ्क् स्वप्ने ॥ १ ॥ ४८. ह्नुङ्क् अपनयने ॥ १ ॥ ४९. षूङौक् प्राणिगर्भविमोचने ॥ १ ॥

५०. पृचैङ् [ चान्तः ] ५१. पृजुङ् ५२. पिजुकि सम्पर्चने ।

---

[शासूक अनुशिष्टौ] अनुशिष्टिर्नियोगः । शास्ति ॥ [वशक् कान्तौ] कान्तिरिच्छा ॥ [असक् भुवि] भवनं भूः सत्ता ॥

[यङ्लुप् च] सर्वे धातवो यङ्लुबन्ताः द्विःकरणाददादौ परस्मैपदिनश्च । बोभवीति बोभोति, पापचीति पापक्ति । यङ्लुबन्तमात्मनेपदे न प्रयुज्यत इत्येके । भावकर्मणोरात्मनेपदे न प्रयुज्यत इत्यन्ये । छन्दस्येवेति केचित् । यङ्लुबन्तस्य चर्करीतं चर्करीतमिति पूर्वेषां सञ्ज्ञा ॥

[ इति परस्मैपदिनोऽदादयः ]

[इङक् अध्ययने] इङिकोरधिनाऽव्यभिचारी योगः । अनुस्वारेत्त्वादनिट्, अध्येता ॥ [ह्नुङ्क अपनयने] अपनयनमपलापः ॥ पृचङ् पृजुङ् पिजुकि सम्पर्चने] सम्पर्चनं मिश्रणम् ॥

५३. वृजैकि वर्जने । ५४. णिजुकि शुद्धौ । ५५. शिजुकि अव्यक्ते शब्दे ॥ (जान्ता ॥५॥) ॥

५६. ईडिक् स्तुतौ ॥ १ ॥ ५७. ईरिक् गतिकम्पनयोः ॥ १ ॥ ५८. ईशिट् ऐश्वर्ये ॥ १ ॥ ५९. वशिक् आसिक् उपवेशने । ६२. कसुकि गतिशातनयोः । ६३. णिसुकि चुम्बने ॥ (सान्ता. ॥५॥) ॥ ६४. चक्षिक् व्यक्तायां वाचि ॥ १ ॥ ॥ आत्मने भाषा ॥

६५. ऊर्णुग्क् आच्छादने । ६६. ष्टुंग्क् स्तुतौ ॥ २ ॥ ६७. ब्रूंग्क् व्यक्तायां वाचि ॥ १ ॥ ६८. द्विषींक् अप्रीतौ ॥ १ ॥ ६९. दुहींक् क्षरणे । ७०. दिहींक् लेपे । ७१. लिहींक् आस्वादने ॥ (हान्ता ॥३॥) ॥ उभयतो भाषा ॥

[आङ शासुकि इच्छायाम्] आङ इत्याङ्पूर्व एवाय प्रयोज्यो, न केवलो, नाप्यन्योपसर्गपूर्व इत्येवमर्थम् ॥ [चक्षिक] "सयोगस्यादौ०" [२, १, ८८] इति कस्य लुकि, आचष्टे ॥

[इत्यात्मनेपदिनोऽदादयः]

अथोभयपदिन । [ऊर्णुग्क "वोर्णो" (४, ३, ६०) रिति वोत्वे, प्रोर्णौति प्रोर्णोति । "न दिस्यो" (४, ३, ६१) रित्यौत्वप्रतिषेधे प्रौर्णोत् प्रोर्णोः] ॥

[इत्युभयपदिनोऽदादय ]



# [ अथ ह्वादयः ]

७२. हुंक् दानादनयोः ॥ १ ॥ ७३. ओहांक् त्यागे ॥ १ ॥ ७४. ञिभींक् भये । ७५. ह्रींक् लज्जायाम् ॥ २ ॥ ७६. पृंक् पालनपूरणयोः । ७७. ऋंक् गतौ ॥ २ ॥
॥ परस्मै भाषाः ॥

७८. ओहांङ्क् गतौ । ७९. मांङ्क् मानशब्दयोः ॥ १ ॥ आत्मने भाषाः ॥

८०. डुदांग्क् दाने । ८१. डुधांग्क् धारणे च ।
॥ २ ॥ ८२. डुडुभृंग्क् पोषणे च ॥ १ ॥

---

॥ अथादाद्यन्तर्गणो ह्वादयः ॥

[हुंक् दानादनयोः] दानमत्र हविःप्रक्षेपः ॥ [ओहांक् त्यागे] ककारोऽदादित्वज्ञापनार्थो "न हाको लुपि" [४, १, ४९] इत्यादौ विशेषणार्थश्च ॥

[डुदांग्क् दाने] "हवः शिति" [४, १, १२] इति द्वित्वे "श्नश्चा०" [४, २, ९६] त्यात्लुकि च दत्ते ॥ [डुडुभृंग्क्] टुवित्वादथुः [भरथुः] । डुवित्वात् त्रिमक् [भृत्रिमम्] ॥

८३. णिजृंकी शौचे च । ८४. विजृंकी पृथग्भावे ॥ २ ॥
८५. विष्लृंकी व्याप्तौ ॥ १ ॥ उभयतो भाषाः ॥

इत्याचार्यश्रीहेमचन्द्रानुस्मृताअदादयः

कितो धातवः ॥ छ ॥

---

[णिजृंकी शौचे च] चापोषणे । ऋदित्वाद् ["ऋदिच्छ्वि०" (३, ४, ६५) इति] वाऽङि [अनिजत्] ॥ [विष्लृंकी] लृदित्वादङि [अविषत्] ॥

अत्रान्यैरन्येऽप्येकादशाधीयन्ते । घृ क्षरणदीप्त्योः । ह्वृ प्रसह्यकरणे । सृ गतौ । भस भर्त्सनदीप्त्योः । किकितौ ज्ञाने । तुर त्वरणे । धिष शब्दे । धन धान्ये । जन जनने । गा स्तुताविति । [ते त्वलौकिकत्वादस्माभिरुपेक्षिताः] ॥

॥ [ इत्यविकरणः किद्-अदादिगणः सम्पूर्णः ] ॥



# [ ॥ अथ दिवादय: ॥ ]

१. दिवूच् क्रीडा–जयेच्छा–पणि–द्युति–स्तुति–गतिषु ॥ १ ॥ २. जॄष् ३. झॄषच् जरसि ॥ (ऋदन्तौ ॥२॥) ॥

४. शोंच् तक्षणे ५. दों ६. छोंच् छेदने । ७. षोंच् अन्तकर्मणि ॥ (ओदन्त ॥४।) ॥

८. व्रीडच् लज्जायाम् ॥ (डान्त ॥१॥) ॥ ९. नृतैच् नर्तने ॥ (तान्त ॥१॥) ॥ १०. कुथच् पूतिभावे । ११. पुथच् हिंसायाम् ॥ (थान्तौ ॥२॥) ॥

---

अथ श्यविकरणा दिवादयो वर्णक्रमेण निर्दिश्यन्ते
तत्रापि पूर्वाचार्यप्रसिद्धयनुरोधेनादौ—

[दिवूच् क्रीडाजयेच्छापणिद्युतिस्तुतिगतिषु] जयेच्छा विजिगीषा । पणिर्व्यवहार क्रयादि । "दिवादे०" [३, ४, ७२] रिति श्ये "भ्वादे०" [२, १, ६३] रिति दीर्घे च 'दीव्यति' । चकरण दिवादित्वज्ञापनार्थम्, एव सर्वत्र ॥ [जॄष् झॄषच् जरसि] जरा वयोहानि. ॥ [षोंच् अन्तकर्मणि] अन्तकर्म विनाश ॥ [नृतैच् नर्तने] नर्तन नाट्यम् ॥ [कुथच् पूतिभावे]

१२. गुधंच् परिवेष्टने । १३. राधंच् वृद्धौ । १४. व्यधंच् ताडने ॥ (धन्ता ॥३॥) ॥

१५. क्षिपंच् प्रेरणे । १६. पुष्पच् विकसने ॥ (पान्तौ ॥२॥) ॥

१७. तिम १८. तीम १९. ष्टिम २०. ष्टीमच् आर्द्रभावे ॥ (मान्ता ॥४॥) ॥

२१. षिवूच् उतौ । २२. श्रिवूच् गतिशोषणयोः । २३. ष्ठिवू २४. क्षिवूच् निरसने ॥ (वान्ताः ॥४॥) ॥

२५. इषच् गतौ ॥ (षान्त ॥१॥) २६. ष्णसूच् निरसने । २७. क्नसूच् ह्वृतिदीप्त्योः २८. त्रसैच् भये । २९. प्युसच् दाहे ॥ (सान्ताः ॥४॥) ॥

३०. षह ३१. षुहच् शक्तौ ॥ (हान्तौ ॥२॥) ॥

---

पूतिभावो दुर्गन्धः [क्लेदः] ॥ [*राधंच् वृद्धौ] वृद्धेरन्यत्र भुरेव [राध्नोत्योदन पच तीत्यर्थः] । मैत्राय राध्यतीत्यत्राऽपि मैत्रस्य वृद्धिविषयं शुभाशुभपर्यालोचनमिति ॥ [षिवूच् उतौ] उतिर्वान तन्तुसन्तान इत्यर्थ ॥ [क्नसूच् ह्वृतिदीप्त्योः] ह्वृतिः कौटिल्यम् ॥ [षुहच् शक्तौ] तृप्तावयमित्येके ॥



---

*स्वादिषु पठिष्यमाणस्याप्यस्येह पाठो वृद्धावेव श्यविकरणार्थः । राध्यति वर्धते इत्यर्थः ॥

# [ अथ पुषादयः ]

३२. पुषंच् पुष्टौ ॥१॥ ३३. उचच् समवाये ॥ [चान्तः] (॥१॥) ॥ ३४. लुटच् विलोटने ॥ [टान्तः] (॥१॥) ॥ ३५. ञिदांच् गात्रप्रक्षरणे । ३६. क्लिदौच् आर्द्रभावे । ३७. ञिमिदाच् स्नेहने । ३८. ञिक्ष्विदाच् मोचने च ॥ (दान्ताः ॥४॥) ॥

३९. क्षुधंच् बुभुक्षायाम् । ४०. शुधंच्+ शौचे । ४१. क्रुधंच् कोपे । ४२. षिधूंच् संराद्धौ । ४३. ऋधूच् वृद्धौ । ४४. गृधूच् अभिकाङ्क्षायाम् । ४५. रधौच् हिंसासंराद्ध्योः ॥ ( धान्ता ॥७॥) ॥

॥ अथ दिवाद्यन्तर्गणः पुषादिः परस्मैपदेष्व ॥

[तत्राऽपि प्रसिद्धपुषोधाद्यादौ, पुषंच् पुष्टौ] अकर्मकोऽयम् ॥ [उचच् समवाये] समवाय ऐक्यम् ॥ [ष्विदांच् गात्रप्रक्षरणे] गात्रप्रक्षरण घर्मस्रुतिः । आदित्वात् क्तयोर्नेट् [स्विन्नः स्विन्नवान्] ॥ [शुधंच् शौचे] शौचं नैर्मल्यम् ॥ [षिधूंच् संराद्धौ] सराद्धिर्निष्पत्तिः । अनुस्वारेत्वान्नेट् [सेद्धा सेद्धुम् सिद्धः] ॥

+ अत्र 'शुधंच् शुद्धौ' इत्यपि पाठः ॥

४६. तृपौच् प्रीतौ । ४७. दृपौच् हर्षमोहनयोः । ४८. कुपच् क्रोधे । ४९. गुपच् व्याकुलत्वे । ५०. युप ५१. रुप ५२. लुपच् विमोहने । ५३. डिपच् क्षेपे । ५४. ष्टूपच् समुच्छ्राये ॥ ॥ (पान्ताः ॥४॥) ॥

५५. लुभच् गाद्धर्ये । ५६. क्षुभच् संचलने । ५७. णभ ५८. तुभच् हिंसायाम् ॥ (भान्ताः ॥४॥) ॥

५९. नशौच् अदर्शने । ६०. कुशच् श्लेषणे । ६१. भृशू ६२. भ्रंशूच् अधःपतने । ६३. वृशच् वरणे । ६४. कृशच् तनुत्वे ॥ (शान्ताः ॥६॥) ॥

६५. शुषंच् शोषणे । ६६. दुषंच् वैकृत्ये । ६७. श्लिषंच् आलिङ्गने । ६८. प्लुषूच् दाहे । ६९. ञितृषच् पिपासायाम् । ७०. तुषं ७१. हृषच् तुष्टौ । ७२.

[तृपौच् प्रीतौ] प्रीतिः सौहित्यम् ॥ [दृपौच् हर्षमोहनयोः] मोहनं गर्वः ॥ [लुभच् गाद्धर्ये] गाद्धर्यमभिकाङ्क्षा ॥ [क्षुभच् संचलने] संचलनं रूपान्यथात्वम् । द्युतादिपठितेनैवाक्षुभदिति सिद्धं श्यविकरणार्थं [क्षु] दिवादावयमवश्यं पठितव्य इति पुष्पादावपि पठितः ॥ [नशौच् अदर्शने] अदर्शनमनुपलब्धिः ॥ [दुषंच् वैकृत्ये] वैकृत्यं रूपभङ्गः ॥ [प्लुषूच्] अनुदिदयमित्येके ॥ [तुषं हृषच् तुष्टौ] तुष्टिः प्रीतिः । 'हृष' उदिदित्येके+ ॥

+ एके इति पदेन 'नन्दी' शेयः ॥

रुषच् रोषे । ७३. प्युष (षान्ताः ॥९॥) ७४. प्युस ७५. पुसच् विभागे । ७६. विसच् प्रेरणे । ७७. कुसच् श्लेषे । ७८. असूच् क्षेपणे । ७९. यसूच् प्रयत्ने । ८०. जसूच् मोक्षणे । ८१. तसू ८२. दसूच् उपक्षये । ८३. वसूच् स्तम्भे । ८४. व्युसच् उत्सर्गे । ८५. मुसच् खण्डने । ८६. मसैच् परिणामे ॥ (सान्ताः ॥१३॥) ॥

[अथ शमादयोऽष्टौ]

८७. शमूच् ८८. दमूच् उपशमे । ८९. तमूच् काङ्क्षायाम् । ९०. श्रमूच् खेदतपसोः । ९१. भ्रमूच् अनवस्थाने । ९२. क्षमौच् सहने । ९३. मदैच् हर्षे । ९४. क्लमूच् ग्लानौ ॥ (मान्ताः ॥८॥) ॥ [इति शमादयोऽष्टौ]

९५. मुहौच् वैचित्त्ये । ९६. द्रुहौच् जिघांसायाम् । ९७. ष्णुहौच् उद्गिरणे । ९८. ष्णिहौच् प्रीतौ ॥ (हान्ताः ॥४॥) ॥ वृत् पुषादिः [६७] ॥ परस्मै भाषाः ॥

---

[ व्युसच् उत्सर्गे ] उत्सर्गस्त्यागः ॥ [ मसैच् परिणामे ] परिणामो विकारः । परिमाणे इत्यन्ये ॥ १३ ॥

अथ शमादीनां सेटां सप्तकं द्वये दीर्घार्थं मदैच् पर्यन्तं [ क्लमू-पर्यन्तं] चाष्टकं घिनणर्थं प्रदर्श्यते । तत्र च बहुत्वान्मान्ताः षडादौ ॥

अथ प्रकृतवर्णक्रमेण हान्ताश्चत्वारः । [मुहौच् वैचित्त्ये] वैचित्त्यमविवेकः ॥

## [अथ स्वादयो नव]

९९. पूङौच् प्राणिप्रसवे । १००. दूङ्च् परितापे ॥ [ऊदन्तौ] (॥२॥) ॥ १०१. दीङ्च् क्षये । १०२. धीङ्च् अनादरे । १०३. मीङ्च् हिंसायाम् । १०४. रीङ्च् श्रवणे[卐] । १०५. लीङ्च् श्लेषणे । १०६. डीङ्च् गतौ । १०७. व्रीङ्च् वरणे ॥ [इदन्ताः] (॥७॥) ॥ वृत् स्वादिः ॥९॥ ॥

॥ पुषादि [दिवाद्यन्त-] गणो वर्तितः सम्पूर्ण इत्यर्थः]

[केचित्तु शमू-दमू-तमू-श्रमू-भ्रमू-क्षमौ-मदै-असौ-यसू-जसू-दसू-वसू प्युष-प्युस-पुस-प्लुषू-विस-कुस-कुश—बुस-मुस-मसै-लुट-उच-भृशू-भ्रंशू-वृश-कृश-ञितृष-हृष-रुष-डिप-प्लूप-कुप-गुप-युप-रुप-लुप-लुभ-णभ-तुभ-क्लिदौ-ञिमिदा-ञिक्ष्विदा-ऋधू-गृधूनां-पुष्पादित्वं नेच्छन्ति[卐]]।

अथात्मनेपदिषु सूर्यत्यादिर्नवकः तयोस्तत्य नरवार्थं प्रदर्श्यते । [डीङ्च् गतौ] भ्वादेरेवेह इयार्थं सूयत्यादिरवार्थं च पाठ इत्येके । तन्मते दयतेरपि डीनः डीनवान् ॥ ९ ॥

卐 तन्मते पुष्पाद्यङभावे सिचि अशमीत् अदमीत् अश्रमीत् अयसीत् अलोटीत् अप्लोपीत् अकोपीत् अलोपीत् अहर्षीदित्यादि ॥

卐 अत्र 'रीङ्च् स्रवणे' इति पाठान्तरम् ॥

१०८. पीङ्च् पाने । १०९. ईङ्च् गतौ । ११०. प्रींङ्च् प्रीतौ ॥ (ईदन्ताः ॥३॥) ॥

१११. युजिंच् समाधौ । ११२. सृजिंच् विसर्गे ॥ (जान्तौ ॥२॥) ॥ ११३. वृतूचि वरणे ॥ [तान्तः ॥१॥] ॥ ११४. पदिंच् गतौ । ११५. विदिंच् सत्तायाम् । ११६. खिदिंच् दैन्ये ॥ (दान्ताः ॥३॥) ॥

११७. युधिंच् सम्प्रहारे । ११८. अनो रुधिंच् कामे । ११९. बुधिं (धान्ताः ॥३॥) १२०. मनिंच् ज्ञाने । १२१. अनिच् प्राणने । १२२. जनैचि प्रादुर्भावे ॥ (नान्ताः ॥३॥) ॥

---

अथेदन्तावयोऽनिटश्च। [पीङ्च् पाने] 'मीङ्च् माने' इत्यपि कश्चिद् ॥

[युजिच् समाधौ] समाधिश्चित्तवृत्तिनिरोधः ॥

[वृतूचि वरणे] 'वृतूङ् वर्तने' इत्यस्यैव वरणे दिवादित्वं विधीयते। अन्ये तु वा वृतूचि वरणे इति दि[-वादि-]त्वं वा पतिपन्नाः। केचित्तु चान्द्र-दिवने [-क-] स्वरोऽयमित्याहुः [वावृत्यते] ॥ [पदिंच् गतौ] गतिर्यानं ज्ञानं च ॥ [युधिंच् सम्प्रहारे] सम्प्रहारो हननम् ॥ [अनो रुधिंच् कामे] काम इच्छा । अनुपूर्वो रुधिर्दिवादिः कामे । [अनुरुध्यते] । कामादन्यत्र रुधादिः ॥ [अनिच्] णान्तोऽयमित्येके ॥

१२३. दीपैचि दीप्तौ । १२४. तपिंच् ऐश्वर्ये वा ॥ [पान्तौ] (॥२॥) ॥

१२५. पूरैचि आप्यायने । १२६. घूरैङ् १२७. जूरैचि जरायाम् । १२८. धूरैङ् १२९. गूरैचि गतौ । १३०. शूरैचि स्तम्भे । १३१. तूरैचि त्वरायाम् ॥ घूरादयो हिंसायां च ॥ ६ ॥ १३२. चूरैचि दाहे ॥ (रान्ताः ॥८॥) ॥

१३३. क्लिशिच् उपतापे । १३४. लिशिंच् अल्पत्वे । १३५. काशिच् दीप्तौ । १३६. वाशिच् शब्दे ॥ (शान्ताः ॥४॥) ॥ आत्मनेभाषाः ॥

---

[तपिंच् ऐश्वर्ये वा] 'तपं धूप सन्तापे' इत्यस्यैवैश्वर्ये[ऽर्थे] दिवादित्वमात्मनेपदं च वा विधीयते । पक्षे ऐश्वर्येऽपि भ्वादित्वम् । एके तु तपिंच् [ऐश्वर्ये इति] धात्वन्तरं दिवादिमाहुः । अन्ये× तु पतोर्विपर्ययेण पतिंच् ऐश्वर्ये [वा] इति पेठुः ॥

[पूरैचि आप्यायने] आप्यायनं वृद्धिः ॥ [घूरादयो हिंसायां च । घूरादयः षडपि हिंसायां] चकाराद्यथायथमुक्तेषु जरादिषु ॥

---

× अन्ये इति पदेन 'द्रमिला' बोध्याः ॥

१३७. शकींच् मर्षणे ॥ १ ॥ १३८. शुचृगैच् पूति-भावे ॥ १ ॥ १३९. रञ्जींच् रागे ॥ १ ॥ १४०. शपींच् आक्रोशे ॥ १ ॥ १४१. मृषींच् तितिक्षायाम् ॥ १ ॥ १४२. णहींच् बन्धने ॥ १ ॥ ॥ उभयतो भाषाः ॥

इत्याचार्यश्रीहेमचन्द्रानुस्मृताः दिवाद्यश्रितो धातवः ॥ छ ॥

अथोभयपदिनः ॥ शकींच् मर्षणे [–अनीदय मर्षणे इयविकरणो–] ऽर्थान्तरे तु [श्नुविकरणः] स्वादिपठित एवेत्येके ॥ [शुचृगैच् पूतिभावे] पूतिभावः क्लेदः ॥



# [ ॥ अथ स्वादयः ॥ ]

१. षुंगट् अभिषवे ॥ २. षिंगट् बन्धने । ३. शिगट् निशाने । ४. डुमिंगट् प्रक्षेपणे । ५. चिंगट् चयने ॥ (इदन्ताः ॥४॥ ) ॥

६. धूगट् कम्पने ॥ (ऊदन्तः ॥१॥) ॥ ७. स्तृंगट् आच्छादने । ८. कृंगट् हिंसायाम् । ९. वृगट् वरणे ॥ (ऋदन्ताः ॥३॥) ॥ उभयतो भाषाः ॥

१०. हिंट् गतिवृद्ध्योः ॥ (इदन्तः ॥१॥) ॥ ११. श्रुंट् श्रवणे । १२. टुदुंट् उपतापे ॥ (उदन्तौ ॥२॥) ॥ १३. पृंट् प्रीतौ । १४. स्मृंट् पालने च ॥ (ऋदन्तौ ॥२॥ ॥

---

अथ स्वादयो वर्णक्रमेण निर्दिश्यन्ते —

तत्राऽपि प्रसिद्ध्यनुरोधेनादौ-[षुंगट् अभिषवे] अभिषवः स्नेहनं सन्धानाख्यं पीडनमन्थनं वा । दीर्घं स्वादित्वज्ञापनार्थम्, एवं सर्वत्र ज्ञेयम् ॥ [शिगट् निशाने] निशानं तनूकरणम् ॥ [चिंगट् चयने] केचित्तु 'चिग्ण् चये' इति चुरादौ पठन्ति, तस्य च घटादित्वम् ["चिस्फुरोर्नवा" (४, २, २२) इत्यात्वाभावं चेच्छन्ति । तन्मते चयति] ॥

१५. शक्लृंट् शक्तौ । १६. 'तिक (कान्तौ ॥ २ ॥) १७. तिग (गान्तः) १८. षघट् हिंसायाम् ॥ (घान्तः ॥१॥) ॥ १९. राधं २०. साधंट् संसिद्धौ । २१. ऋधूट् वृद्धौ ॥( धान्ताः ॥३॥)॥ २२. आप्लृंट् व्याप्तौ । २३. तृपट् प्रीणने ॥(पान्तौ ॥२॥)॥ २४. दम्भूट् दम्भे ॥ [भान्तः] १ ॥ २५. कृवुट् हिंसाकरणयोः । २६. चिवुट् गतौ ॥ (वान्तौ ॥२॥) ॥ २७. ञिधृषाट् प्रागल्भ्ये ॥ [षान्तः ॥१॥] ॥ परस्मैभाषाः ॥

२८. ष्टिघिट् आस्कन्दने ॥ (घान्तः॥) ॥ २९. अशौटि व्याप्तौ ॥ (शान्तः ॥१॥) ॥ आत्मने भाषौ ॥

इत्याचार्यश्रीहेमचन्द्रानुस्मृताः स्वादयष्टितो धातवः ॥

---

[शक्लृंट् शक्तौ] ये तु शक्यतेः [पुष्यादित्वं प्रतिपन्नास्तेषां] पुष्यादित्वादेवाङि सिद्धे लृदित्वमात्मनेपदेऽप्यङर्थम् । तेन "क्रियाव्यतिहारे०" [३. ३. २३] इति [आत्मनेपदेऽङि] व्यत्यशकत ॥ [तिक तिग षघट हिंसायाम्] आघावास्कन्दनेऽपीत्येके । [षघंट्] अषोपदेशोऽयमित्येके [सिघाघयिषति] । 'तिक तिघ चषघ हिंसायाम्' इत्यन्ये पेठुः ॥ 'चिवुट् गतौ' इत्यनन्तरं येऽन्यैरष्टौ पठिताः × 'अह व्याप्तौ, दघ घातने, ऋक्षि चिरि जिरि दाश दृ हिंसायामिति' तेऽलौकिकत्वादुपेक्षिताः ॥ अथात्मनेपदिनौ [सेटौ च] । [अशौटि व्याप्तौ] सङ्घातेऽप्यन्ये ॥

---

× अत्र 'ये त्वन्यरिहाष्टौ पठिता' इत्यपि पाठः ॥

# [ अथ तुदादयः ]

१. तुदींत् व्यथने (॥१॥) २. भ्रस्जींत् पाके ॥ [जान्तः] (॥१॥) ॥ ३. क्षिपींत् प्रेरणे ॥ [पान्तः] (॥१॥) ॥ ४. दिशींत् अतिसर्जने ॥ [शान्त] (॥१॥) ॥ ५. कृषींत् विलेखने ॥ [षान्तः] (॥१॥) ॥

[ अथ मुचादयोऽष्टौ ]

६. मुच्लृंती मोक्षणे । ७. षिचींत् क्षरणे ॥ [ चान्तौ ॥२॥ ] ॥ ८. विद्लृंती लाभे ॥ [दान्तः ॥१॥] ॥ ९. लुप्लृंती छेदने । १०. लिपींत् उपदेहे ॥ [उभयतो भाषाः] ॥ ५-विभाषिताः ॥

११. कृतैत् छेदने । १२. खिदंत् परिघाते । १३. पिशत् अवयवे ॥ ३-एव मुचादि ॥

अथ तुदादयस्तितो वर्णक्रमेण—

तत्र प्रसिद्धयनुरोधेनादौ ['तुदींत् व्यथने' । निरयं तुदादिज्ञापनार्थं सर्वत्र ज्ञेयम् ॥

[मुच्लृंती] अथ मुचादयोऽष्टौ, तत्राद्यः पञ्चापि उभयपदिनः त्रयः परस्मैपदिनः, खिदंवर्जाः सेटश्च ॥ [लिपींत् उपदेहे] उपदेहो वृद्धिः ॥ [खिदंत् परिघाते] परितापे इत्यन्ये ॥ [पिशत् अवयवे] मुचादिपाठे विश्रान्ति ॥ ८ ॥

१४. रिं १५. पित् गतौ । १६. धित् धारणे । १७. क्षित् निवासगत्योः ॥ [इदन्ताः](॥४॥) ॥

१८. पूत् प्रेरणे ॥ [ऊदन्तः] (॥१॥) ॥ १९. मृंत् प्राणत्यागे ॥ [ऋदन्तः ॥१॥] ॥ २०. कृत् विक्षेपे । २१. गृत् निगरणे ॥ [ऋदन्तौ](॥२॥) ॥ २२. लिखत् अक्षरविन्यासे ॥ [खान्तः] (॥१॥)॥

२३. जर्च २४. झर्चत् परिभाषणे । २५. त्वचत् संवरणे । २६. ऋचत् स्तुतौ । २७. ओव्रस्चौत् छेदने ॥ (चान्ताः ॥५॥) ॥

२८. ऋछत् इन्द्रियप्रलयमूर्त्तिभावयोः । २९. विछत् गतौ । ३०. उछैत् विवासे । ३१. मिछत् उत्क्लेशे । ३२. उछुत् उञ्छे । ३३. प्रछंत् ज्ञीप्सायाम् ॥ (छान्ताः ॥६॥) ॥

---

[रिं] अथ प्रकृतवर्णक्रमेणेदन्ताद्यनुक्रमोऽनिदंश ॥
[गृत् निगरणे] निगरणं भोजनम् ॥ [त्वचत् संवरणे] संवरणमाच्छादनम् ॥ [ओव्रस्चौत्] द्वयोरप्योऽगम् ॥ [उछैत् विवासे] विवासोऽतिक्रमः ॥ [मिछत् उत्क्लेशे] उत्क्लेशो बाधनम् । मिछेनि इमिला ॥
[उछुत् उञ्छे] उञ्छ उच्चयः ॥ [प्रछंत् ज्ञीप्सायाम] ज्ञीप्सा जिज्ञासा ॥

३४. उब्जत् आर्जवे । ३५. सृजंत् विसर्गे । ३६. रुजोंत् भङ्गे । ३७. भुजोंत् कौटिल्ये । ३८. टुमस्जोंत् शुद्धौ । ३९. जर्ज (जान्ताः ॥६॥) ४०. झर्झत् परिभाषणे । ४१. उद्झत् उत्सर्गे ॥ (झान्तौ ॥२॥) ॥

४२. जुडत् गतौ । ४३. पृड ४४. मृडत् सुखने । ४५. कडत् मदे ॥ (डान्ताः ॥४॥) ॥

४६. पृणत् प्रीणने । ४७. तुणत् कौटिल्ये । ४८. मृणत् हिंसायाम् ॥ ४९. द्रुणत् गतिकौटिल्ययोश्च । ५०. पुणत् शुभे । ५१. मुणत् प्रतिज्ञाने । ५२. कुणत् शब्दोपकरणयोः । ५३. घुण ५४. घूर्णत् भ्रमणे ॥ (णान्ताः ॥९॥) ॥

५५. चृतैत् हिंसाग्रन्थयोः ॥ [तान्त] (॥१॥) ५६. णुदंत् प्रेरणे । ५७. षद्लृंत् अवसादने ॥ (दान्तौ ॥२॥) ॥

[टुमस्जोंत् शुद्धौ] शुद्धिः स्नानं बुडनं च कथ्यते ॥ [उद्झत्] शेषान्त्योऽयं "तवर्गस्य०" [१. ३. ६०] इति दस्य जत्वे, उज्झति ॥ [कडत् मदे] भक्षणे इत्यन्ये ॥

[पुणत् शुभे] शुभं शुभविषया क्रिया ॥

[णुदंत् प्रेरणे] ईदिदयमित्येके । [तन्मते "ईगित" (३. ३. ९५) इति फलवत्कर्तर्यात्मनेपदे, नुदते नुनुदे] ॥

५८. विधत् विधाने ॥ [पान्त] ॥१॥ ॥ ५९. जुन ६०. शुनत् गतौ ॥ [नान्तौ] ॥२॥ ॥ ६१. छुपंत् स्पर्शे ॥ [पान्त] ॥१॥ ॥

६२. रिफत् कथन–युद्ध–हिंसा–दानेषु । ६३. तृफ ६४. तृम्फत् तृप्तौ । ६५. ऋफ ६६. ऋम्फत् हिंसायाम् । ६७. दृफ ६८. दृंफत् उत्क्लेशे । ६९. गुफ ७०. गुंफत् ग्रन्थने ॥ (फान्ता ॥११) ॥

७१. उभ ७२. उंभत् पूरणे । ७३. शुभ ७४. शुंभत् शोभार्थे । ७५. दृभैत् ग्रन्थे । ७६. लुभत् विमोहने ॥ (भान्ता. ॥६॥) ॥

७७. कुरत् शब्दे । ७८. क्षुरत् विलेखने । ७९. खुरत् छेदने च । ८०. घुरत् भीमार्थशब्दयोः । ८१. पुरत् अग्रगमने । ८२. मुरत् संवेष्टने । ८३. सुरत् ऐश्वर्य-दीप्त्योः । ८४. स्फर (रान्ताः ॥८॥) ८५. स्फलत् स्फुरणे । ८६. किलत् श्वैत्यक्रीडनयोः । ८७. इलत् गति-

---

[तृफ तृम्फत्] पा०...चेताविरयेके । [तृपति । शे नलुक् च नेष्यते, तृम्पति] ॥ [ऋम्फत्] इकारोपान्त्यो रादिश्चायमित्यन्यः । [रम्फते शे पक्षे-पामिदं, रिफति । रिरिम्फ] ॥

[शुम्भत् शोभार्थे] शुम्भ भाषणे चेत्यर्थभेदात् पाठ [शुम्भति । भ्वादौ शुम्भ लिङ्गमनार्थयो] दम्भादिरित्येके ॥ २ ॥

स्वप्नक्षेपणेषु । ८८. हिलत् हावकरणे । ८९. शील ९०. सिलत् उञ्छे । ९१. तिलत् स्नेहने । ९२. चलत् विलसने । ९३. चिलत् वसने । ९४. विलत् वरणे । ९५. बिलत् भेदने । ९६. णिलत् गहने । ९७. मिलत् श्लेषणे ॥ (लान्ताः ॥१२॥) ॥

९८. स्पृशंत् संस्पर्शे । ९९. रुशं १००. रिंशत् हिंसायाम् । १०१. विंशत् प्रवेशने । १०२. मृशंत् आमर्शने । १०३. लिशं (शान्ताः ॥६॥) १०४. ऋफैत् गतौ । १०५. इषत् इच्छायाम् । १०६. मिषत् स्पर्द्धायाम् ॥ (षान्ताः ॥३॥) ॥ १०७. वृहोत् उद्यमे । १०८. तृहौ १०९. तृंहौ ११०. स्तृहो १११. स्तृंहोत् हिंसायाम् ॥ (हान्ताः ॥५॥) ॥

[ अथ कुटादयः ]

११२. कुटत् कौटिल्ये ॥ ११३. गुंत् पुरीषोत्सर्गे । ११४. ध्रुंत् गतिस्थैर्ययोः ॥ (उदन्तौ ॥२॥) ॥

११५. णूत् स्तवने । ११६. धूत् विधूनने ॥ (ऊदन्तौ ॥२॥) ॥

---

[स्तृहो स्तृंहोत्] पोरदेनाविमाविल्येदं ॥ ५ ॥
अथ तुदाद्यन्तर्गण' कुटादि-गण प्रसिद्धयनुरोधेनादौ 'कुट्' ॥

११७. कुचत् संकोचने । ११८. व्यचत् व्याजीकरणे ॥ (चान्तौ ॥२॥) ॥ ११९. गुजत् शब्दे ॥ [जान्त] ॥१॥ ॥१२०. घुटत् प्रतीघाते । १२१. चुट १२२. छुट १२३. त्रुटत् छेदने । १२४. तुटत् कलहकर्मणि । १२५. मुटत् आक्षेप-प्रमर्दनयोः । १२६. स्फुटत् विकसने । १२७. पुट [टान्ता. ॥८॥ ]१२८. लुठत् संश्लेषणे ॥ [ठान्तः ॥१॥] ॥

१२९. कृडत् घसने । १३०. कुडत् बाल्ये च । १३१. गुडत् रक्षायाम् । १३२. जुडत् बन्धे । १३३. तुडत् तोडने । १३४. लुड १३५. थुड १३६. स्थुडत् संवरणे । १३७. वुडत् उत्सर्गे च । १३८. व्रुड १३९. भ्रुडत् संघाते । १४०. दुड १४१. हुड १४२. त्रुडत् निमज्जने ॥ [डान्ता ॥१४॥] ॥

१४३. चुणत् छेदने ॥ [णान्त] ॥१॥ ॥ १४४. डिपत् क्षेपे ॥ [पान्त] ॥१॥ ॥ छुरत् छेदन । १४६. स्फुरत् स्फुरणे [रान्तौ ॥२॥] १४७. स्फुलत् संचये च ॥ [लान्तः] ॥१॥ ॥

॥ परस्मै भाषा ॥

---

[लुठन्] डान्तत्वायमित्येके [लुडति लुलोड लुडिता । 'लुठ उपघाते' लोठति । 'लुठि प्रतीघाते' लोठते] ॥

[कृडत् घसने] घसन भक्षणम् ॥

१४८. कुंङ् १४९. कूङ्त् शब्दे ॥ (ऊदन्तः ॥१॥) ॥

१५०. गुरैति उद्यमे ॥ रान्तः ॥ ३९. ॥ वृत् कुटादिः ॥

१५१. पृंङ्त् व्यायामे । १५२. दृंङ्त् आदरे । १५३. धृङ्त् स्थाने ॥ (ऋदन्ताः ॥३॥) ॥

१५४. ओविजैति भयचलनयोः । १५५. ओलजैङ् १५६. ओलस्जैति व्रीडे । १५७. ष्वञ्जित् सङ्गे ॥ (जान्ताः ॥४॥) ॥

१५८. जुषैति प्रीतिसेवनयोः ॥ [षान्तः] ॥१॥ ॥

॥ आत्मने भाषाः ॥

इत्याचार्यश्रीहेमचन्द्रानुस्मृतास्तुदादयस्तितो धातवः ॥

---

[वृत् कुटादिः] तुदाद्यन्तर्गणः कुटादिः सम्पूर्ण इत्यर्थः ॥

अथ प्रकृतवर्णक्रमेण [ऋदन्तास्त्रयोऽमिधीयन्ते] । [पृङ्त् व्यायामे] व्यायाम उद्योगः ॥ [धृङ्त् स्थाने] धारणे इत्यन्ये ॥



# [अथ रुधादयः]

१. रुधृंपी आवरणे ॥ १ ॥ २. रिचृंपी विरेचने । ३. विचृंपी पृथग्भावे ॥ (वाम्मो ॥२॥) ॥ ४. युजृंपी योगे ॥ [अन्तः] ॥१॥ ॥

५. भिदृंपी विदारणे । ६. छिदृंपी द्वेधीकरणे । ७. क्षुदृंपी संपेपे+ । ८. उछृदृंपी दीप्तिदेवनयोः । ९. उतृदृंपी हिंसानादरयोः ॥ (दान्ताः ॥५॥) ॥ उभयतो भाषाः ॥

१०. पृचैप् संपर्के । ११. वृचैप् वरणे । १२. तञ्चू (चान्ताः ॥३॥) १३. तञ्जौप् संकोचने । १४. भञ्जौप् आमर्दने । १५. भुजंप् पालनाभ्यवहारयोः । १६.

---

अथ रुधादयः श्नविकरणा वर्णक्रमेण प्रदर्श्यन्ते ।

[रुधृंपी आवरणे] आवरणं [illegible] । [illegible] ॥

[रिचृंपी विरेचने] विरेचनं [illegible] ॥

[उछृदृंपी दीप्तिदेवनयोः] [illegible] ॥

[भुजंप् पालनाभ्यवहारयोः] [illegible] ॥

---

+'संपेपे' इत्यत्र 'संक्षेपे' इति पाठः क्वचित् ॥

अञ्जौप् व्यक्ति-म्रक्षण-गतिषु । १७. ओविजैप् भय-चलनयोः ॥ (जान्तौ ॥५॥) ॥

१८. कृतैप् वेष्टने ॥ [तान्त] ॥१॥ ॥ १९. उन्दैप् क्लेदने ॥ [दान्त.] १ ॥ २०. शिष्लृंप् विशेषणे । २१. पिष्लृंप् संचूर्णने ॥ (षान्तौ ॥२॥) ॥ २२. हिंसु [सान्त] (१) २३. तृहप् हिंसायाम् ॥ [हान्त] (१) ॥ परस्मैभाषाः ॥

२४. खिदिंप् दैन्ये । २५. विदिंप् विचारणे ॥ (दान्तौ ॥२॥) ॥ २६. ञिइन्धैपि दीप्तौ ॥ [धान्त.] ॥१॥ ॥

॥ आत्मने भाषा ॥

इत्याचार्य-श्रीहेमचन्द्रानुस्मृता रुधादयः पितो धातवः ॥

---

[अञ्जौप् व्यक्तिम्रक्षणगतिषु] व्यक्ति प्रकटता । म्रक्षण घृतादिसेकः । तत्र केवलस्य म्रक्षणे एव वृत्तिः, सोपसर्गविशेषस्य तु शेषयोरिति विवेक. ॥

[शिष्लृंप् विशेषणे] विशेषण गुणान्तरोपादनम् ॥

[इति श्नविकरणः पित्-रुधादिगणः सम्पूर्णः]



# [ ॥ अथ तनादयः ॥ ]

१. तनूयी विस्तारे । २. षणूयी दाने । ३. क्षणूग् ४. क्षिणूयी हिंसायाम् । ५. ऋणूयी गतौ । ६. तृणूयी अदने । ७. घृणूयी दीप्तौ ॥ (नाम्नाः ॥७॥) ॥

॥ उभयतो भाषा ॥

८. वनूयि याचने । ९. मनूयि बोधने ॥ (नाम्नो ॥२॥)

॥ आत्मने भाषौ ॥

इत्याचार्य-श्रीहेमचन्द्रानुस्मृतास्तनादयो यितो धातवः ॥ छ ॥

---

अथ तनादय उविकरणा वर्णक्रमेण प्रदर्श्यन्ते—

तत्रोभयपदिष्वाद्यौ नाम्ना सप्त सेटश्च । [तनूयी विस्तारे] यित् तनादित्वज्ञापनार्थम् । [ईदित्त्वात् "ईदितः" (४ ३ ९७) इति [illegible] स्मनेपदे "[illegible]" (३ ४ ८१) ऋदुकारे च 'तनुते'] ॥

[इति उविकरणो यित्-तनादिगणः सम्पूर्णः]

—०—

# [॥ अथ क्र्यादयः ॥]

१. डुक्रींग्श् द्रव्यविनिमये। २. पिंग्श् बन्धने। [इदन्तः] १ ॥ ३. प्रींग्श् तृप्तिकान्त्योः । ४. श्रींग्श् पाके। ५. मींग्श् हिंसायाम् ॥ (ईदन्ताः ॥३॥) ॥

६. युंग्श् बन्धने । ७. स्कुंग्श् आप्रवणे ॥ (उदन्तौ ॥२॥) ॥ ८. क्नूग्श् शब्दे । ९. द्रूग्श् हिंसायाम् ॥ [ऊदन्तौ ॥२॥] ॥ १०. ग्रहीश् उपादाने ॥ [हान्तः] ॥१॥ ॥

[प्वादयः २२.]

११. पूग्श् पवने ॥

[प्वाद्यन्तर्गणो ल्वादिः]

१२. ल्वूग्श् छेदने । १३. धूग्श् कम्पने ॥

---

अथ क्र्यादयः श्नाविकरणाः [वर्ण] क्रमेण प्रस्तूयन्ते—

[तत्रादौ डुक्रींग्श् द्रव्यविनिमये] विनिमयः परिवर्त्तनम् ॥ [प्रींग्श् तृप्तिकान्त्योः] कान्तिरभिलाषः ॥ [स्कुंग्श् आप्रवणे] आप्रवणमुद्धरणम् ॥ [द्रूग्श् हिंसायाम्] गताविसम्बे ॥ [ग्रहीश् उपादाने] उपादानं स्वीकारः ॥

अथ प्वाद्यन्तर्गणः प्वादिः "प्वादेर्ह्रस्व" [४. २. १०५] इति ह्रस्वयोजनार्थः प्रदर्श्यते। [तत्रोदन्तादयः संदृश्य। 'पूग्श् पवने'। पवनं शुद्धिः]

अथ प्वाद्यन्तर्गणो ल्वादिः-" ऋवर्णादे० " [४. १. ८८] इति णत्वार्थः प्रदर्श्यते। [ल्वूग्श् छेदने] "प्वादे०" [४. २. १०५] इति ह्रस्वे,

(ऊदन्ताः ॥२॥) ॥ १४. स्तॄग्श् आच्छादने । १५. कॄग्श्
हिंसायाम् । १६. वॄग्श् वरणे ॥ (ऋदन्ताः ॥३॥) ॥

॥ उभयतो भाषा ॥

१७. ज्यांश् हानौ ॥ [आदन्तः] (१) ॥ १८. रींश् गति-
रेषणयोः । १९. लींश् श्लेषणे । २०. व्लींश् वरणे ।
२१. ल्वींश् गतौ ॥ (ईदन्ताः ॥४॥) ॥

२२. कॄ २३. मॄ २४. शॄश् हिंसायाम् । २५. पॄश्
पालन-पूरणयोः । २६. बॄश् भरणे । २७. भॄश् भर्जने
च । २८. दॄश् विदारणे । २९. जॄश् वयोहानौ । ३०.
नॄश् नये । ३१. गॄश् शब्दे । ३२. ऋॄश् गतौ ॥
(ऋदन्ताः ॥११॥) ॥ वृत् प्वादि--२२, ल्वादि --२१ ॥

३३. ज्ञांश् अवबोधने ॥ [आदन्तः] १ ॥ ३४. क्षिप्श्
हिंसायाम् ॥ [इदन्तः] १ ॥ ३५. व्रींश् वरणे । ३६. भ्रींश्

---

लुनीते लुनाति । "ऋल्वादे०" [४. २. ६८] रिति [क्तक्तवतू] नत्वे, लूनः
लूनवान् लूनिः ॥

[रींश् गतिरेषणयोः] रेषण हिंसा ॥ [व्लींश् वरणे] गतावित्यन्ये
[ल्वींश् गतौ] 'ल्वींश् श्लेषणे' इत्यप्येके पठन्ति ॥ [भॄश् भर्जने च] भर्जनं पाक॰
। चकाराद्भरणे । भासने इत्यप्यन्ये ॥ [दॄश् विदारणे] भये इत्यन्ये ॥
[बॄश् भरणे] वरणे इत्यन्ये । ओष्ठ्यादिः ॥

# [॥ अथ क्र्यादयः ॥]

१. डुक्रींग्श् द्रव्यविनिमये । २. पिंग्श् बन्धने ।
[इदन्तः] १ ॥ ३. प्रींग्श् तृप्तिकान्त्योः । ४. श्रींग्श् पाके ।
५. मींग्श् हिंसायाम् ॥ (ईदन्ताः ॥३॥) ॥

६. युंग्श् बन्धने । ७. स्कुंग्श् आप्रवणे ॥
(उदन्तौ ॥२॥) ॥ ८. क्नूग्श् शब्दे । ९. द्रूग्श् हिंसायाम् ॥
[ऊदन्तौ ॥२॥] ॥ १०. ग्रहीश् उपादाने ॥ [हान्तः] ॥१॥ ॥

[ प्वादयः २२. ]

११. पूग्श् पवने ॥

[ प्वाद्यन्तर्गणो ल्वादिः ]

१२. लूग्श् छेदने । १३. धूग्श् कम्पने ॥

---

अथ क्र्यादयः श्नाविकरणाः [वर्णा] क्रमेण प्रस्तूयन्ते—

[तत्रादौ डुक्रींग्श् द्रव्यविनिमये] विनिमयः परिवर्तनम् ॥ [प्रींग्श् तृप्तिकान्त्योः] कान्तिरभिलाषः ॥ [स्कुंग्श् आप्रवणे] आप्रवणमुद्धरणम् ॥ [द्रूग्श् हिंसायाम्] गतावित्यन्ये ॥ [ग्रहीश् उपादाने] उपादानं स्वीकारः ॥

अथ क्र्याद्यन्तर्गणः प्वादिः "प्वादेर्ह्रस्वः" [४. २. १०५] इति ह्रस्व-प्रयोजनार्थः प्रदर्श्यते । [तत्रोदन्ताश्चयः सेटश्च । 'पूग्श् पवने' । पवनं शुद्धिः]

अथ प्वाद्यन्तर्गणो ल्वादिः—" ऋल्वादेः० " [४. २. ६८] इति नत्वार्थः प्रदर्श्यते । [लूग्श् छेदने] "प्वादेः०" [४. २. १०५] इति ह्रस्वे,

(ऊदन्ताः ॥३॥) ॥ १४. स्तॄञ् आच्छादने । १५. कॄञ् हिंसायाम् । १६. वॄञ् वरणे ॥ (ॠदन्ताः ॥३॥) ॥

॥ उभयतो भाषाः ॥

१७. ज्यांश् हानौ ॥ [आदन्तः] (१) ॥ १८. रींश् गति-रेषणयोः । १९. लींश् श्लेषणे । २०. व्लींश् वरणे । २१. ल्वींश् गतौ ॥ (ईदन्ताः ॥४॥) ॥

२२. कॄ २३. मॄ २४. शॄश् हिंसायाम् । २५. पॄश् पालन-पूरणयोः । २६. बॄश् भरणे । २७. भॄश् भर्जने च । २८. दॄश् विदारणे । २९. जॄश् वयोहानौ । ३०. नॄश् नये । ३१. गॄश् शब्दे । ३२. ऋश् गतौ ॥ (ॠदन्ताः ॥११॥) ॥ वृत् प्वादिः-२२, ल्वादिः-२१ ॥

३३. ज्ञांश् अवबोधने ॥ [आदन्तः] १ ॥ ३४. क्षिप्श् हिंसायाम् ॥ [इदन्तः] १ ॥ ३५. व्रींश् वरणे । ३६. भ्रींश्

लुनीते लुनाति । "ॠल्वादे०" [४. २. ६८] रिति [क्तक्तीनां तो] नत्वे, लूनः लूनवान् लूनिः ॥

[रींश् गतिरेषणयोः] रेषणं हिंसा ॥ [व्लींश् वरणे] गताविल्यन्ये [ल्वींश् गतौ] 'ल्वींश् श्लेषणे' इत्यप्येके पठन्ति ॥

[बॄश् भरणे] वरणे इत्यन्ये । ओष्ठ्यादिः ॥ [भॄश् भर्जने च] भर्जनं पाकः । चकाराद्भरणे । भर्त्सने इत्यप्यन्ये ॥ [दॄश् विदारणे] भये इत्यन्ये ॥

भरणे ॥ [ईदन्तौ] २ ॥ ३७. हेठश् भूतप्रादुर्भावे ॥ [ठान्त.] १ ॥ ३८. मृडश् सुखने ॥ [डान्त.] १ ॥

३९. श्रन्थश् मोचनप्रतिहर्षणयोः । ४०. मन्थश् विलोडने । ४१. ग्रन्थश् संदर्भे । ४२. कुन्थश् संक्लेशे ॥ [थान्ताः] ४ ॥

४३. मृदश् क्षोदे ॥ [दान्तः] १ ॥ ४४. गुधश् रोषे । ४५. बन्धश् बन्धने ॥ [धान्तौ] २ ॥ ४६. क्षुभश् संचलने । ४७. णभ ४८. तुभश् हिंसायाम् ॥ [भान्ताः] ३ ॥

४९. खवश् हेठश्वत् ॥ [वान्तः] १ ॥ ५०. क्लिशौश् विबाधने । ५१. अशश् भोजने ॥ [शान्तौ] २ ॥

५२. इषश् आभीक्ष्ण्ये । ५३. विपश् विप्रयोगे । ५४. प्रुष ५५. प्लुषश् स्नेह-सेचन-पूरणेषु । ५६. मुषश् स्तेये । ५७. पुषश् पुष्टौ । ५८. कुषश् निष्कर्षे ॥ [षान्ताः] ७ ॥ ५९. ध्रसूश् उञ्छे ॥ [सान्त.] १ ॥ परस्मै भाषाः ॥

वृङ्श सम्भक्तौ ॥ १ ॥ आत्मने भाषा ॥

इत्याचार्यश्रीहेमचन्द्रानुस्मृताः-त्र्यादयः शितो धातवः ॥

---

[छिदश् भूतप्रादुर्भावे] भूतप्रादुर्भावो [अतिक्रान्तोत्पत्तिः] ॥

[ इति श्नाविकरणः शित्-क्र्यादिगणः सम्पूर्ण ]

# [ अथ चुरादयः ]॥

## १. चूरण् स्तेये ॥१॥ २. पूण् पुरणे । ३. घृण् स्रवणे

अथ णितश्चुरादयो वर्णक्रमेण प्रस्तूयन्ते—

तत्रादौ 'चुरण स्तेये' । णित्व चुरादित्वज्ञापनार्थम् । स्वार्थिकत्वेना-
न्तरङ्गत्वाद् विशेषविधानाच्च कर्त्रादिकारकापेक्षत्वेन बहिरङ्गेभ्य सामान्यविहि-
तेभ्यश्च तिबादिभ्य प्रागेव "चुरादिभ्य०" [३ ४ १७] इति स्वार्थे णिचि,
णिजन्तस्याऽपि क्रियार्थत्वाद्धातुत्वे 'शेषाद्०" [३ ३ १००] इति परस्मैपद
चोरयति । णिचो णित्वाभावात् फलवत् कर्त्तर्यात्मनेपद नास्ति । चन्द्रस्तु
णिच्यप्युभयपदित्वमाम्नासीत् णिन् विकल्प च । ['धातोरनेकस्वराद्०" (३
४ ४६) इति परोक्षाया आमि चोरयाचकार "णिश्रि०" (३ ४ ५८) इति
३, अचूचुरत् ।] चोरयन्त प्रायुङ्क्तेति णिजन्तात् "प्रयोक्तृव्यापारे०" [३ ४.
२०] इति णिगि 'णेरनिटि' [४ ३ ८३] इति णिचो लुक्यपि णिजात्य-
श्रवणात् समानलोपित्वाभावाद् "उपान्त्यस्य०" [४ २. ३५] इति ह्रस्वे,
"लघोर्दीर्घ०" [४ १ ६४] इति पूर्वस्य दीर्घे च अचूचुरत् ॥ इह पचुण्
चितुण्-प्रभृतीना सनकारनिर्देशमकृत्वा उदित्करण चुरादिणिचोऽनित्यत्वज्ञा-
पकम्, न च चिन्त्यते इत्यादौ नलोपाभावार्थम् । ततो णिन्लुक स्थानित्वेनो-
पान्त्याभावाच्च लुकोऽप्रसङ्गात् । तेन चोरति चिन्ततीत्यादि सिद्धम्, इद च
ज्ञापक घुषेरविशब्दने [इति विशब्दने-] प्रतिषेध । अय [हि] विशब्दने घुषे-
रिट्प्रतिषेधाभावार्थ स च णिचो नित्यत्वेऽनेकस्वरत्वादेव सिद्ध, तेन
'महीपालवच श्रुत्वा, जुघुषु पुष्यमाणवा' इत्यपि सिद्धम् ॥ १ ॥
ऋदन्तौ द्वौ । [पूण्] [स्वार्थ णिचि, पारयति] ऋदन्तोऽयमित्येके ।
'पृक् पालनपूरणयो' पिपर्ति । 'पृङ्त् व्यायामे' व्याप्रियते । [घृण् स्रवणे]
घृ, स आवरणे' इति पूर्वे पेठु ॥ २ ॥

॥ [ऋदन्तौ] २॥ ॥

४. श्वल्क ५. वल्कण् भाषणे । ६. नक्क ७. धक्कण् नाशने । ८. चक्क ९. चुक्कण् व्यथने । १०. टकुण् बन्धने । ११. अर्कण् स्तवने ॥ (कान्ताः ॥८॥) ॥

१२. पिच्चण् कुट्टने । १३. पचुण् विस्तारे ॥ (चान्तौ ॥२॥) ॥

१४. म्लेछण् म्लेच्छने ॥ [छान्तः ॥१॥] ॥

१५. ऊर्जण् बल-प्राणनयोः । १६. तुजु १७. पिजुण् हिंसा-बल-दान-निकेतनेषु । १८. क्षजुण् कृच्छ्र-जीवने । १९. पूजण् पूजायाम् । २०. गज २१. मार्जण् शब्दे । २२. तिजण् निशाने । २३. वज २४. व्रजण्

---

कान्ता अष्टौ । [चुक्कण् । चिकेति कौशिकः । चिक्कणम्, चिक्कणम्] ॥८॥

चान्तौ द्वौ । [पचुण् विस्तारे । उदित्वात्] प्रपञ्चयति । [अभि प्रपञ्च'] 'पचुङ् व्यक्तीकरणे' पञ्चते ॥ २ ॥

[म्लेछण् म्लेच्छने] म्लेच्छनमव्यक्ता वाक् । [म्लेच्छयति] 'म्लेछ अव्यक्तायां वाचि' [म्लेच्छति] ॥ १ ॥

अथ जान्ता एकादश । [तुजु पिजुण् हिंसाबलदाननिकेतनेषु । निकेतनं गृहम्] लुजुमप्येके पेठुः, [तुञ्जयति] । 'लोकृ तर्के' ति [दण्डकेऽनयोः] पुन. पाठोऽर्थभेदार्थं आत्मनेपदार्थः सकर्मकार्थश्च [तुञ्जयते पिञ्जयते] 'तुजु बलने च' तुञ्जति । 'पिजुकि सम्पर्चने' पिङ्क्ते ॥ [तिजण् निशाने] 'तिजि क्षमा-

मार्गणसंस्कारगत्योः । २५. रुजण् हिंसायाम् ॥ (जान्ताः ॥११॥) ॥

२६. नटण् अवस्यन्दने । २७. तुट २८. चुट २९. चुट्ट ३०. छुटण् छेदने। ३१. कुट्टण् कुत्सने च । ३२. पुट्ट ३३. चुट्ट ३४. षुट्टण् अल्पीभावे । ३५. पुट ३६. मुटण् संचूर्णने । ३७. अट्ट ३८. स्मिटण् अनादरे । ३९. लुण्टण् स्तेये च । ४०. स्निटण् स्नेहने । ४१. घट्टण् चलने । ४२. खट्टण् संवरणे । ४३. षट्ट ४४. स्फिटण् हिंसायाम् । ४५. स्फुट्टण् परिहासे । ४६. कीटण् वर्णने । ४७. वटुण् विभाजने । ४८. रुटण् रोषे ॥ (टान्ताः ॥२३॥) ॥

निशानयोः । ["गुप्तिजो०" (३, ४, ५) इति सनि तितिक्षते । निशाने । तु तेजने] ॥ [वज व्रजण् मार्गणसंस्कारगत्योः] मार्गणो बाणस्तस्य संस्कारे गतौ च । मार्गसंस्कारेऽपीत्यन्ये ॥ ११ ॥

अथ टान्ताख्योविंशतिः । [नटण् अवस्यन्दने] अवस्यन्दनं भ्रंशः 'णट नृत्तौ' [नटति] नतौ घटादित्वाद्ध्रस्वे नटयति [शाखाम्] । नतेरन्यत्र [घटादित्वाभावे] नाटयति [नटम्] । [नडेति नन्दी । नडः नाडी प्रणाल प्रणाली] ॥ [पुट्टण् अल्पीभावे] अपोपदेशोऽयमनादरार्थश्चेत्यन्ये ॥ [मुटण् संचूर्णने] 'मुटत् आक्षेपप्रमर्दनयो' [मुटति] ॥ [स्फुट्टण् परिहासे] अयं स्फुटण इत्येके [स्फोटयति] ॥ [वटुण् विभाजने] डान्तोऽयमित्येके, वण्डयति। 'वटु विभाजने' वण्टति ॥ २३ ॥

४९. शठ ५०. श्वठ ५१. श्वठुण् संस्कारगत्योः । ५२. शुठण् आलस्ये । ५३. शुठुण् शोषणे । ५४. गुठुण् वेष्टने ॥ (ठान्ताः ॥६॥) ॥

५५. लडण् उपसेवायाम् । ५६. स्फुडुण् परिहासे । ५७. ओलडुण् उत्क्षेपे । ५८. पीडण् गहने । ५९. तडण् आघाते । ६०. खड ६१. खडुण् भेदे । ६२. कडुण् खण्डने च । ६३. कुडुण् रक्षणे । ६४. गुडुण् वेष्टने च । ६५. चुडुण् छेदने । ६६. मडुण् भूषायाम् । ६७. भडुण् कल्याणे । ६८. पिडुण् संघाते । ६९. ईडण् स्तुतौ । ७०. चडुण् कोपे । ७१. जुड

(डान्ताः ॥१७॥)

---

अथ ठान्ताः षट् । [शठ संस्कारगत्योः] 'शठ कैतवे च' [शठति] ॥ [शुठण् आलस्ये] 'शुठ गतिप्रतीघाते' [शोठति] ॥ [शुठुण् शोषणे] 'शुठ शोषणे' [शुण्ठति] ॥ ६ ॥

अथ डान्ताः सप्तदश । [लडण् उपसेवायाम्] [लाडयति । डस्य ह्रस्वे उपलालयति । 'लड विलासे' लडति । ] जिह्वोन्मन्थने [घटादित्वाण्णिगि ह्रस्वे] लडयति ॥ [पीडण् गहने] गहन बाधा । अवगाहने इत्येके ॥ [कडुण खण्डने च] चकाराद्भेदे । 'खुडुण् खण्डने' इत्येके [खुण्डयति खुण्डितः] ॥ [गुडुण् वेष्टने च] चकाराद्रक्षणे ॥ [भडुण्] दान्तोऽयमित्यन्ये [भन्दयति] ॥ [पिडुण्] 'पडुण्' अयमित्यन्ये । [पण्डयति] ॥ [१७] ॥

७२. चूर्ण ७३. वर्णण् प्रेरणे । ७४. चूण ७५. तूणण् सङ्कोचने । ७६. श्रणण् दाने । ७७. पूणण् संघाते ॥ [णान्ताः] ॥६॥ ॥

७८. चितुण् स्मृत्याम् । ७९. पुस्त ८० बुस्तण् आदराऽनादरयोः । ८१. मुस्तण् संघाते । ८२. कृतण् संशब्दने । ८३. स्वर्त (तान्ताः ॥६॥) ८४. पथुण् गतौ । ८५. श्रथण् प्रतिहर्षे । ८६. पृथण् प्रक्षेपणे । ८७. प्रथण् प्रख्याने ॥ (थान्ताः ॥४॥) ॥

[श्रणण् दाने] । श्राणयति । 'श्रण दाने' श्रणति ॥ णान्ताः ६ ॥ [चितुण् स्मृत्याम्] उदित्त्वाच्चिन्तयति । "णिवेत्ती०" [५, ३, १०९] स्यादि चिन्ता । [५, ३, १११] स्यनापवादे "भीषि-भूषी०" भीष्यादिभ्योऽनापवादेप्रत्ययेऽपि णेर्लुकि भीषादीनां भिदादित्विधानं णेर्लुको-ऽनित्यत्वज्ञापनार्थम् । तेन णेर्लुगभावे "संयोगाद्" [२, १, ५२] इति इयि चिन्तिया । तथा—

"न यमनेन न जातवेदसा न कुबेरेण न वज्रपाणिना ।
मघवो युधि सुभकम्पया श्वसनेनैव वसुन्धरापते ॥ १ ॥"

अत्र सुभपूर्वात् कम्पेः क्वलि, णेर्लुगभावे गुणेपादेशे च 'सुभकम्पया' इति सिद्धम् । ज्ञापकेन च क्वचिदेव णिलुगभावो ज्ञाप्यते । श्रामादिषु तु सर्वत्रा-व्यभिचार्यऽऽदेश इत्याम्नेति वचनम् ॥ [पुस्त आदरानादरयोः] ... [कृतण् संशब्दने] संशब्दनं ख्यातिः ॥ [स्वर्त गतौ] ... वन्दने इति चन्द्रः ॥ ... कृच्छ्रजीवनेऽप्ययमित्यन्ये ॥ [६] ॥ घोपदेशोऽयमिति नन्दी । [श्रथण् प्रतिहर्षे] प्रतियत्ने इत्यन्ये । 'श्रथण् बन्ध' इति चुरादौ पठ्यमानोऽप्यर्थभेदादिह पुनरधीतः । आत्मनेपदे न च ... नार्थं इह पाठ इत्येके [श्राथयते] ॥ [४] ॥

८८. छदण् संवरणे ८९. चुदण् संचोदने । ९०. मिदुण् स्नेहने । ९१. गुर्दण् निकेतने । ९२. छर्दण् वमने ॥ (दान्ताः ॥५॥) ॥

९३. बुधुण् हिंसायाम् । ९४. वर्धण् छेदन–पूरणयोः । ९५. गर्धण् अभिकाङ्क्षायाम् । ९६. बन्ध ९७. बधण् संयमने ॥ (धान्ताः ॥५॥) ॥

९८. छपुण् गतौ । ९९. क्षपुण् क्षान्तौ । १००. ष्टूपण् समुच्छ्राये । १०१. डिपण् क्षेपे । १०२. ल्पपण् व्यक्तायां वाचि । १०३. डपु १०४. डिपुण् संघाते । १०५. शूर्पण् माने ॥ (पान्ताः ॥८॥) ॥

---

अथ दान्ताः पञ्च [छदण् संवरणे । छादयति] ऊर्जने तु घटादित्वाद्ध्रस्वे छदयति । अदन्तोप्ययमित्येके [छदयति] । 'छदण् अपवारणे' "युजादे०" [३, ४, १८] रिति वा णिचि, छादयति छदति । रूपान्यत्वार्थं चेह पाठः, छादयते । अत्रात्मनेपदं सिद्धम् ॥ [चुदण् सचोदने] संचोदनं नोदनम् ॥ [मिदुण स्नेहने] टान्तोयमित्येके [मिण्टयति] । नायमुदिदिति कौशिकः ॥ [गुर्दण् निकेतने] पूर्वनिकेतने इत्येके । पूर्वनिकेतनमाद्यो निवासः ॥ [छर्दण् वमने । इह 'गर्दण् शब्दे' इत्येके पेठुः । गर्दयति गर्दभः । भ्वादौ गर्दति ।] अयं गर्जे इत्यपरे ॥ [५] ॥

[बुधुण् हिंसायाम्] ठान्तोयमित्यन्ये [बुण्ठयति] । [धान्ताः–५] ॥

अथ पान्ता अष्टौ । [ष्टूपण् समुच्छ्राये] अषोपदेशोऽयमित्यन्ये ॥ डपु डिपुण् [संघाते] अभिमर्दने इत्येके ॥ [८] ॥

१०६. शुल्बण् सर्जने च । १०७. डबु १०८. डिबुण् क्षेपे । १०९. सम्बण् सम्बन्धे । ११०. कुबुण् आच्छादने । १११. लुबु ११२. तुबुण् अर्दने । ११३. पुर्वण् निकेतने ॥ (वान्ताः ॥८॥) ॥

११४. यमण् परिवेषणे ॥ [मान्तः] १ ॥ ११५. व्ययण् क्षये ॥ (यान्तः) ॥ ११६. यत्रुण् संकोचने । ११७. कुद्रुण् अनृतभाषणे । ११८. श्वभ्रण् गतौ ॥ (रान्ताः ॥३॥) ॥

---

अथ वान्ता अष्टौ । [शुल्बण् सर्जने च] तालव्यादिः । चकारान्माने ॥ [डिबुण्] केचित्तु दभ-दभु-दिभूनपि भान्तानिहाधीयते ॥

॥ इति श्रीपूर्वमहर्षिसङ्कलिता टिप्पणिका समाप्ता ॥

अग्रगा नाऽवलोक्यते, एतत्स्थाने मुनिश्रीदक्षविजय-संयोजिता टिप्पणिका प्रारभ्यते—

सम्बण्—षोपदेशोऽयमित्यन्ये । तालव्यादिरयमिति द्रमिलाः ॥ तुबुण्-अत्र तुपुणित्यप्यन्ये । तुम्पयति ॥ पुर्वण्—मचि पूर्वः । पूर्वं इत्यमरकोषे ओष्ठ्यान्तेषु पठितस्तत्प्रकृतित्वानुरोधाद्वान्तेष्वयमस्माभिरिहाधीतः ॥

यमण् परिवेषणे—अपरिवेषणे इत्यन्ये । यामयत्यतिथीन् । परिवेषणादन्यत्र "यमोऽपरिवेषणे णिचि च" (४, २, २९) इति ह्रस्वे यमयति कुद्रुण्—गादिरयमित्यन्ये ॥

११९. तिलण् स्नेहने । १२०. जलण् अपवारणे । १२१. क्षलण् शौचे । १२२. पुलण् समुच्छ्राये । १२३. विलण् भेदे । १२४. तलण् प्रतिष्ठायाम् । १२५. तुलण् उन्माने । १२६. दुलण् उत्क्षेपे । १२७. बुलण् निमज्जने । १२८. मूलण् रोहणे । १२९. कल १३०. किल १३१. पिलण् क्षेपे । १३२. पलण् रक्षणे । १३३. इलण् प्रेरणे । १३४. चलण् भृतो ॥ (लान्ता ॥१६॥) ॥

अथ लान्ता षोडश । तिलण् स्नेहने-तेलयति । 'तिलत् स्नेहने' तिलति ॥ जलण्-अयं लजण्-इति नन्दी । लाजयति । अचि लाजा । 'जल घात्ये' जलति ॥ क्षलण् शौचे-शौच शोधकर्म ॥ पुलण् समुच्छ्राये-पोलयति । 'पुल महत्त्वे' पोलति । तुदादावप्ययमित्येके । तन्मते पुलति ॥ विलण् भेदे-ओष्ठ्यादि । अत्र भिलेति कौशिक । 'विलत् भेदने' बिलति ॥ तुलण्-तोलयति । तुलयतीति तुलशब्दात् "णिज बहुलम्॰" (३, ४, ४२) इति णिचि रूपम् ॥ मूलण् रोहणे-मूलयति । मुलेति नन्दी मोलयति । 'मूल प्रतिष्ठायाम्' मूलति ॥ कल-कालयति गा । अचि कालयति क्षिपति स्वेषु स्वेषु पर्यायान्तरेषु भावानिति काल । 'कलण् सख्यानगत्यो' भदन्त, मेकलयति । 'कलि शब्दसख्यानयोः' कलते ॥ किल-केलयति । 'किलत् श्वैत्यक्रीडनयो' किलति ॥ पलण्-पालयति । पालेति चन्द्र । पाली ॥ इलण् एलयति "उपसर्गस्याऽनिणेधेदोति" (१, २, १९) इति अवर्णलोपे, प्रेलयति परेलयति । 'इलत् गतिस्वप्नक्षेपणेषु' इलति ॥ चलण् भृतो-चालयति । 'चल कम्पने' चलति । कम्पने घटादित्वाद्ध्रस्वे चलयति । 'चलत् विलसने' चलन्ती स्त्री कुले वा, अत्र "अवर्णादश्नोऽन्तो॰" (२, १, ११५) इति वागुर्णं न्यादेशो बोध्य ॥ १६ ॥

१३५. सान्त्वण् सामप्रयोगे ॥ (वान्तः ॥१॥) ॥ १३६. धूशण् कान्तीकरणे ॥ [शान्तः] १ ॥ १३७. श्लिषण् श्लेषणे । १३८. लूषण् हिंसायाम् । १३९. रुषण् रोषे । १४०. प्युषण् उत्सर्गे ॥ (षान्ताः ॥४॥) ॥

१४१. पसुण् नाशने । १४२. जसुण् रक्षणे । १४३. पुंसण् अभिमर्दने । १४४. ब्रूस १४५. पिस १४६. जस

सान्त्वण् सामप्रयोगे—सान्त्वयति । अषोपदेशत्वात् "णिस्तोरेवा॰" (२, ३, ३७) इति षत्वाभावे सिसान्त्वयिषति । षोपदेशोऽमित्येके, तन्मते सिषान्त्वयिषति । साम सान्त्वप्रयोगे' इति चन्द्र. । सामयति । 'सामण सान्त्वने' अदन्त., अससामत् ॥

धूशण्—धूशयति । दन्त्यान्त्योऽयमित्येके धूसयति । मूर्धन्यान्तोऽयमित्यन्ये धूषयति ॥

अथ षान्ताश्चत्वारः । श्लिषण-श्लेषयति । 'श्लिषू दाहे' श्लेषति । 'श्लिषंच् आलिङ्गने' श्लिष्यति ॥ रुषण्-रोषयति । 'रुष हिंसायाम्' रोषति । 'रुषच् रोषे' रुष्यति ॥ प्युषण्-प्योषयति । 'प्युषच् विभागे' प्युष्यति ॥१॥

अथ सान्ताः षट् । जसुण्-अत्र दहुण् इत्यप्येके, दंहयति ॥ पुंसण्- "नञः पुंसेः" (३२) इत्युणादिसूत्रेण अकप्रत्यये "नखादय." (३, २, १२८) इति नखादित्वान्नञोऽदभावे नपुंसकम् ॥ पिस-गतावयमित्येके । बलदानेनिकेतनेष्वपीत्यन्ये । 'पिसृ गतौ' पेसति । ऋदनुबन्धत्वाण्णौ ङे ह्रस्वाभावे अपिपेसत् । एके त्वाहुः नायमृदित्, तथा च णिचो नित्यत्वाच्चौरादिकेनैव पेसतीति प्रयोगसिद्धौ भ्वादौ पाठोऽस्यात्मनेपदार्थः, पेसते ॥ जस-"आसनाट॰"

(सान्ताः ॥६॥) **१४७. वर्हण् हिंसायाम् । १४८. ष्णिहण् स्नेहने** ॥ (हान्तौ ॥२॥) ॥

**१४९. म्रक्षण् म्लेच्छने । १५०. भक्षण् अदने । १५१. पक्षण् परिग्रहे** ॥ (क्षान्ताः ॥३॥) ॥

**१५२. लक्षीण् दर्शनाङ्कनयोः** ॥ (क्षान्तः ॥१॥) ॥

॥ इतोऽर्थविशेषे आलक्षिणः ॥

---

(२, २, १४) इति कर्मणो वा कर्मत्वे "शेषे" (२, २, ८१) इति षष्ठ्याम्, चौरस्योज्जासयति ॥ ६ ॥

अथ हान्तौ । वर्हण्-वर्हयति । 'वर्हि प्राधान्ये' वर्हते ॥ ष्णिहण्-"षः सोऽष्ट्यै०" (२, ३, ९८) इति से स्नेहयति । षोपदेशत्वात् "णिस्तो-रेवा०" (२, ३, ३७) इति षत्वे, सिष्णेहयिषति । 'ष्णिहौच् प्रीतौ' स्निह्यति ॥

अथ क्षान्तास्त्रयः । म्रक्षण्-म्रक्षयति । भ्वादौ 'म्रक्षरोषे' इत्येके, म्रक्षति ॥ भक्षण्-णिगि "भक्षेर्हिंसायाम्" (२, २, ६) इत्यणिक्कर्तुः कर्मत्वे भक्षयति गौर्यवान् भक्षयति गां यवान् चैत्रः । अत्र यवानां प्ररोहधर्मत्वेन चेतनत्वाद्भक्षणे प्राणवियोगलक्षणा हिंसाऽस्त्येव । हिंसाया अभावे "गतिबोधाहारार्थ०" (२, २, ५) इति प्राप्तकर्मत्वमपि न भवतीति "हेतुकर्तृ०" (२, २, ४४) इति कर्तरि तृतीयायाम्, भक्षयति पिण्डीं शिशुना चैत्रः ॥ ३ ॥

अथोभयपदी क्षान्तः । लक्षीण् दर्शनाङ्कनयोः—अङ्कनं चिह्नम् । लक्षयति, लक्षयते । 'लक्षिण् आलोचने' अर्थविशेषे चुरादिः, लक्षयते ॥ १ ॥

इतः परमर्थविशेषे चुरादयो लक्षिणपर्यन्ताः प्रस्तूयन्ते—

१५३. ज्ञाण् मारणादिनियोजनेषु ॥ [आदन्तः] १ ॥ १५४. च्युण् सहने ॥ [उदन्तः] १ ॥ १५५. भूण् अवकल्कने ॥ [ऊदन्तः ॥१॥] ॥

१५६. बुक्कण् भषणे १५७. रक १५८. लक (कान्ताः ॥३॥) १५९. रग १६०. लगण् आस्वादने। १६१. लिगुण् चित्रीकरणे ॥ (गान्ताः ॥३॥) ॥

ज्ञाण् मारणादिनियोजनेषु—मारणादयो "मारणतोरणनिशाने ज्ञश्च" (४, २, ३०) इति सूत्रोक्तास्तेषु नियोजने घार्थे जानातिश्रुगादिः । मारणे-"मारण०" इति ह्रस्वे संज्ञपयति पशुम् । तोषणे-विज्ञपयति गुरुम् । निशाने-प्रज्ञपयति शस्त्रम् । नियोजने-आज्ञापयति भृत्यम्, अत्र मारणाद्यर्थाभावाद् ह्रस्वाभावः । उक्तेभ्योऽर्थेभ्योऽन्यत्र न चुरादिरिति क्र्यादित्वात् श्नाः, आजानाति ॥

च्युण् सहने—हसने इत्येके । च्यावयति शरान्, सहते इत्यर्थः । अन्यत्र 'च्युंङ् गतौ' च्यवते ॥ भूण् अवकल्कने—अवकल्कन मिश्रीकरणम् । भावयेद् ब्राह्मणं तपः । अव-भावयति दध्नौदनम् । विकल्कने इति नन्दी । भावयति साधुः समयम् । 'भू सत्तायाम्' भवति । प्राप्तौ कल्पने इत्यन्ये । तु "भूङः प्राप्तौ णिङ्" (३, ४, १९) इति वा णिङि भावयते, भवते ॥

अथ कान्तास्त्रयः । बुक्कण् भषणे—भाषणे इत्येके । आभाषणे इत्यन्ये । बुक्कयति श्वा चौरान् । भषणादन्यत्र 'बुक्क भाषणे' बुक्कति ॥ रक लक आस्वा-दने—आसादने इत्यन्ये । आराकयति आलाकयति धर्मम् ॥ ३ ॥

अथ गान्तास्त्रयः । रग लगण् आस्वादने—अन्यत्र 'रगे शङ्कायाम्' रगति । 'लगे सङ्गे' लगति । णिगि "घटादेर्ह्रस्वो०" (४, २, २४) इति ह्रस्वे, रगयति लगयति ॥ लिगुण् चित्रीकरणे—लिङ्गयति शब्दम् । स्त्रीपुं-नपुंसकलिङ्गैश्चित्रीकरोतीत्यर्थः । अन्यत्र 'लिगु गतौ' लिङ्गति, आलिङ्गति ॥ ३ ॥

१६२. चर्चण् अध्ययने। १६३. अञ्चण् विशेषणे। १६४. मुचण् प्रमोचने ॥ (चान्ताः ॥३॥) ॥
१६५. अर्जण् प्रतियत्ने। १६६. भजण् विश्राणने॥ (जान्तौ ॥२॥) ॥ १६७. चट १६८. स्फुटण् भेदे । १६९. घटण् संघाते ॥ (टान्ताः ॥३॥) हन्त्यर्थाश्च ॥

---

अथ चान्तास्त्रयः । चर्चण्—चर्चयति शास्त्रम् । "भीषिभूषि०" (५, ३, १०९) इत्यङि, चर्चा । अन्यत्र 'चर्चत् परिभाषणे' इति केचित्, चर्चति ॥ अञ्चण् विशेषणे-विशेषणमतिशयः । अञ्चयत्यर्थम्, व्यक्तीकरोतीत्यर्थः । अन्यत्र 'अञ्चू गतौ च' अञ्चति ॥ मुचण्-मोचयति शरान् । प्रयोजने इत्यन्ये । मोचयति कुण्डले प्रयोजयतीत्यर्थः । अन्यत्र 'मुचि कल्कने' इत्येके, मोचते । 'मुच्लृंती मोक्षणे' मुञ्चते मुञ्चति ॥ ३ ॥

अथ जान्तौ । अर्जण् प्रतियत्ने-प्रतियत्नः संस्कारः । अर्जयति हिरण्यम्, निवेशयतीत्यर्थः अन्यत्र तु 'अर्ज सर्ज अर्जने' अर्जति ॥ भजण् विश्राणने-विश्राणनं विपचनम् । भाजयति । अन्यत्र 'भजी सेवायाम्' भजते भजति ॥

अथ टान्तास्त्रयः । स्फुटण् भेदे-स्फोटयति । अर्थान्तरे तु 'स्फुट् विसरणे' स्फोटति । 'स्फुटि विकसने' स्फोटते । 'स्फुटत् विकसने' स्फुटति ॥ घटण् सङ्घाते-घाटयति । अर्थान्तरे तु 'घटिष् चेष्टायाम्' घटते । घटादित्वाद्धस्वे घटयति ॥ हन्त्यर्थाश्च-येऽन्यत्र हन्त्यर्था हिंसार्थाः पठ्यन्ते तेऽत्र चुरादौ वेदितव्याः । 'हनंक् हिंसागत्योः' घातयति । 'हिंसु रुधप् हिंसायाम्' हिंसयति, तर्हयति । तत्तद्गणपाठसामर्थ्यात्तु हन्ति हिनस्ति तृणेढीत्यादयोऽपि । अनेनैव च सिद्धेऽप्येषां हिंसार्थानां चुरादौ पाठ आत्मनेपदादिगतरूपभेदार्थः । अन्ये तु चटस्फुटौ चट च हन्त्यर्थां इत्यादं पाठं मन्यन्ते । अस्यायमर्थः इत्यं चानुरादूपूर्वेश्च स्फुट इति चट इत्ययं च ययोऽप्येते हन्त्यर्थाः हिंसार्थाः मग-

## १७०. कणण् निमीलने ॥ (णान्त ॥१॥) ॥ १७१.
## यतण् निकारोपस्कारयोः॥(तान्त ॥१॥)॥निरश्च प्रतिदाने×॥१॥
## १७२. शब्दण् उपसर्गाद्भाषाविष्कारयोः। १७३.

श्चुरादौ भवन्ति । चाटयति आस्फोटयति घाटयति हन्तीत्यर्थ । अर्थान्तरे तु न चुरादिरयम्, चटति आस्फुटति घटते । अपरे त्वन्यथा व्याचक्षते । चटास्फुटौ । आस्फुटत्यर्थे चुरादि, चाटयति । घट च । अथ चास्फुटत्यर्थे चुरादि, घाटयति । अन्यत्र चटति घटते ॥

कणण—अर्थान्तरे तु 'कण शब्दे' कणति । गतौ घटादित्वाण्णिगि ह्रस्वे कणयति ॥

यतण् निकारोपस्कारयो —निकार खेदनम् । उपस्कारे यातयति दरिद्रो नागरस्य धनम् । प्रतियातयति प्रतिबिम्बयतीत्यर्थं । अर्थान्तरे तु 'यतैङ् प्रयत्ने' यतते । निरश्च प्रतिदाने—निर परो यति प्रतिदानेऽर्थे चुरादि, निर्यातयति ऋणम् , शोधयतीत्यथ ॥

अथ दान्ता घट । शब्दण उपसर्गाद्भाषाऽऽविष्कारयो —भाषो भाषणम् । भाषे आविष्कारे चार्थे शब्द इत्यय धातुरुपसर्गात्परश्चुरादि । विश ब्दयति, प्रशब्दयति । प्रतिशब्दयति प्रतिश्रुत्कामाविष्करोतीत्यथ । योगविभा गोऽश्रेति नन्दी । तन्मते उपसर्गादित्येक शब्द इत्यय धातुरुपसर्गात्परश्चुरादि प्रशब्दयति निशब्दयति । भाषाविष्कारयोरित्यपर । अनुपसर्गायाऽयमारम्भ । पूर्वस्तु भाषणाविष्कारार्थं शब्दयति, विशब्दयति । अन्यस्तु शब्दक्रियायामि- त्यधीते, शब्दयति । भषणस्यापि शब्दविशेषक्रियारूपत्वादत्रैवान्तर्भाव । तत उपसर्गादाविष्कार इति पठित्वा प्रशब्दयति निशब्दयतीत्याविष्कारमात्रे उदाहरति ॥

× 'प्रतिपादने इत्यप्यत्र पाठ क्वचित् ॥

**पूदण्* आस्रवणे । १७४. आङः क्रन्दण् सातत्ये । १७५. ष्वदण् आस्वादने । १७६. आस्वदः सकर्मकात् । १७७. मुदण् संसर्गे ॥ (दान्ताः ॥६॥) ॥**

**१७८. शृधण् प्रसहने ॥ (धान्तः ॥१॥) ॥ १७९. कृपण् अवकल्कने ॥ (पान्तः ॥१॥) ॥ १८०. जभुण् नाशने ॥ (मान्तः ॥१॥) ॥ १८१. अमण् रोगे ॥ (मान्तः ॥१॥) ॥ १८२.**

पूदण् आस्रवणे—क्षरणे इत्येके । अर्थान्तरे तु 'पूदि क्षरणे' सूदते ॥ ष्वदण्
आङः क्रन्दण्—अर्थान्तरे तु 'क्रदु रोदनाह्वानयोः' आक्रन्दति ॥ ष्वदण्
आस्वादने—संवरणे इत्यन्ये । अर्थान्तरे तु 'ष्वदि आस्वादने' मैत्राय स्वदते
दधि ॥ आस्वदः सकर्मकात्—आङ्पूर्वाद् स्वदतेः सकर्मकाण्णिज् भवति ।
आस्वादयति यवागूम् । अन्ये तु 'ग्रसण् ग्रहणे, पुषण् धारणे, दलण् विदारणे,
लोकृ तर्केति भासार्थदण्डकः; पूरण् आप्यायने, स्वदण् संवरणे इति क्रमेण
पठित्वा व्याख्यान्ति ग्रसिमारभ्य आस्वदः स्वदमभिव्याप्य यो धातुः पठितस्त-
स्मात् सकर्मकक्रियावचनादेव णिज् भवति । ततोऽकर्मकेभ्यो णिचो व्यावृत्तिः ॥
मुदण संसर्गे—अर्थान्तरे 'मुदि हर्षे' मोदते ॥ ६ ॥

शृधण् प्रसहने—प्रसहनमभिभवः । अप्रसहने इत्येके । अप्रसहनम-
मर्षः । अर्थान्तरे तु 'शृधूङ् शब्दकुत्सायाम्' शर्धते । 'शृधूग् उन्दे' शर्धते शर्धति ॥

कृपण् अवकल्कने—अवकल्कनं मिश्रीकरणं सामर्थ्यं च । कल्पयति ।
अवकल्पने इत्यन्ये । चन्द्रस्तु भूकृपो द्वावप्यवकल्कने चिन्तने इति व्याख्यत्;
सम्भावयति, अवकल्पयति । अर्थान्तरे तु 'कृपौङ् सामर्थ्ये' कल्पते ॥

जभुण्—वधे जम्भयते । जभणिति चन्द्रः । "जभः स्वरे" (४, ४, १००)
इति स्वरात्परे ने जम्भयति । अर्थान्तरे तु 'जभुङ् गात्रविनामे' जम्भते ॥

अमण् रोगे—"अमोऽकमि-अमि-चमः" (४. २. २६) इत्यत्रामो

* अत्र 'आश्रवणे' इति पाठान्तरम् ॥

चरण् असंशये । १८३. पूरण् आप्यायने॥ (रान्तौ ॥२॥) ॥ १८४. दलण् विदारणे ॥ (लान्तः ॥१॥) ॥ १८५. दिवण् अर्दने (वान्तः ॥१॥) १८६. पश (शान्तः ॥१॥) १८७. पषण् बन्धने । १८८. पुषण् धारणे । १८९. घुषण् विशब्दने, आङः क्रन्दे ।

---

वर्जनात् 'यमो परिवेषणे' इत्यत्र णिचो नियमार्थाद्वा ह्रस्वाभावे "रुजार्थस्य०" (२. २. १३) इति वा कर्मणः कर्मत्वे शेषषष्ठ्याम्, आमयति चौरस्य ज्वरः । अर्थान्तरे तु 'अम गतौ' अमति ॥

चरण् असंशये—अन्ये तु चरण् संशये इति पठन्ति । विचारणा हि संशये सति भवतीति चाहुः । अर्थान्तरे तु 'चर भक्षणे च' चरति ॥

पूरण् आप्यायने-अर्थान्तरे तु 'पूरैचि आप्यायने' पूर्यते ॥ दलण् विदारणे-अर्थान्तरे तु 'दल विशरणे' दलति । णिगि घटादित्वाद् ह्रस्वे दलयतीत्येके ॥

दिवण्-अतिपूर्वादेव णिजित्येके । अर्थान्तरे तु 'दिवूच् क्रीडादौ' दीव्यति ॥

अथ पान्ताश्चत्वारः । पषण-दन्त्यान्त्योयमित्येके । अर्थान्तरे तु 'पषी बाधनस्पर्शनयोः', इति मूर्धन्यान्तस्तालव्यान्तो दन्त्यान्तश्च आचार्यभेदेन पशते पशति, पषते पषति, पसते पसति ॥ पुषण् धारणे-अर्थान्तरे तु 'पुष पुष्टौ' पोषति । 'पुषंच् पुष्टौ' पुष्यति । 'पुषश् पुष्टौ' पुष्णाति ॥ घुषण् विशब्दने-विशब्दनं विशिष्टशब्दकरणं नानाशब्दनं वा । अविशब्दने इत्येके । अपघोषयति पापम् अपह्नुते इत्यर्थः । ऋदित्करणं चुरादिणिचोऽनित्यत्वे लिङ्गम् । तेन "ऋदिच्छ्वि०" (३, ४, ६५) इति वाऽङि अघुषत्, पक्षे अघोषीत । माघ-मृदिदिति कौशिकः । अर्थान्तरे तु 'घुषृ शब्दे' घोषति । आङः क्रन्दे-क्रन्दने सातत्ये इत्यन्ये । आङः परो घुषिः क्रन्देऽर्थे चुरादिर्भवति । आघोषयति ।

१९०. भूष (षान्ताः ॥४॥) १९१. तसुण् अलङ्कारे । १९२. जसण् ताडने । १९३. त्रसण् वारणे । १९४. वसण् स्नेह-च्छेदाऽवहरणेषु । १९५. ध्रसण् उत्क्षेपे । १९६. ग्रसण् [ग्रहणे]। १९७.लसण् शिल्पयोगे ॥ (सान्ताः ॥७॥) ॥ १९८. अर्हण् पूजायाम् ॥ (हान्त. ॥१॥) ॥ १९९. मोक्षण् असने ॥ (क्षान्तः ॥१॥) ॥

---

अन्ये त्वाङः क्रन्दः सातत्ये इति पठन्ति । आङः परात् क्रन्देः सातत्येऽर्थे णिज् भवति । आक्रन्दयति नित्यम् । अन्यत्र आक्रन्दति ॥ भूष-'भूष अलङ्कारे' भूषति ॥ ४ ॥

अथ सान्ताः सप्त । तसुण्-'तसुण् अलङ्कारे' तसति ॥ जसण्-अर्थान्तरे तु 'जसूच् मोक्षणे' जस्यति । 'जसण् हिंसायाम्' इति पठितोऽप्यर्थभेदात् पुनः पठितः ॥ त्रसण् वारणे-धारणे इति नन्दी । ग्रहणे इत्येके । त्रासयति मृगान् निराकरोतीत्यर्थः । अर्थान्तरे तु 'त्रसैच् भये' त्रस्यति, त्रसति ॥ वसण्-अर्थान्तरे तु 'वस निवासे' वसति । 'वसिक् आच्छादने' वस्ते ॥ ध्रसण् उत्क्षेपे-उञ्छे इत्येके । अर्थान्तरे तु 'ध्रसूश् उञ्छे' ध्रस्नाति । उकारादी इमावित्येके उध्रासयति, उध्रस्नाति ॥ ग्रसण्-अर्थान्तरे तु 'ग्रसूङ् अदने' ग्रसते ॥ लसण् शिल्पयोगे-लासयति दारु, भ्रमादिना तक्ष्णोतीत्यर्थः । अर्थान्तरे तु 'लस श्लेषणक्रीडनयोः' लसति । भ्वादौ पाठः शिल्पयोगेऽपि णिज्भावार्थः । एवमन्यत्रापि । षान्तोऽयमित्येके । लाषयति दारु । अन्यत्र 'लषी कान्तौ' लषति, लष्यति । लाक्ष्यान्त इति तु कौशिकः ॥ ७ ॥

अर्हण्—अर्हयति । हे आर्हिहद । अन्यत्र 'अर्ह पूजायाम्' अर्हति ॥

मोक्षण्-अन्यत्र मोक्षति ॥

२००. लोक्ृ २०१. तर्क (कान्तौ) २०२. रघु २०३. लघु (घान्तौ) २०४. लोचृ (चान्तः) २०५. विछ (छान्त.) २०६. अजु २०७. तुजु २०८. पिजु २०९. लजु २१०. लुजु २११. भजु (जान्ताः ६) २१२. पट २१३. पुट २१४. लुट २१५. घट २१६. घट्ट (टान्ताः ५)

## अथ वर्णक्रमेण भासार्थाः—

तत्र कान्तौ । लोक्ृ-अन्यत्र 'लोकृङ् दर्शने' लोकते ॥ तर्क-गणान्त-
रेष्वपठिता अन्यत्र दण्डके पाठाद्वातव एवेत्यर्थान्तरे तर्कति ॥ २ ॥
अथ घान्तौ । रघु लघु-अन्यत्र 'रघुङ लघुङ् गतौ' रङ्घते लङ्घते ॥
लोचृ-अन्यत्र 'लोचृङ् दर्शने' लोचते ॥ विछ-"स्वरेभ्यः" (१, २, २०)
इति द्वित्वे विच्छयति । अन्यत्र 'विछत् गतौ' । "अशवि ते वा" (३, ४, ४)
इति वाऽऽये विच्छायति, विच्छति ॥
अथ जान्ताः षडुदितश्च । अजु-अञ्जयति । अन्यत्र 'अञ्जौप् व्यक्त्यादौ'
व्यनक्ति ॥ तुजु-अन्यत्र 'तुजु बलने च' तुञ्जति ॥ पिजु-अन्यत्र 'पिजुकि
सम्पर्चने' पिङ्क्ते ॥ लजु-अन्यत्र 'लजु भर्त्सने' लञ्जति ॥ लुजु-अन्यत्र
लुञ्जति ॥ भजु-अन्यत्र 'भञ्जौप् आमर्दने' भनक्ति ॥ ६ ॥
अथ टान्ताः पञ्च । पट-अन्यत्र 'पट गतौ' पटति । 'पटण् ग्रन्थे'
अदन्तः, पटयति ॥ पुट-अन्यत्र 'पुटत् संश्लेषणे' पुटति ॥ लुट-अन्यत्र 'लुटि
प्रतीघाते' लोटते । 'लुटच् विलोडने' लुट्यति ॥ घट-'अन्यत्र 'घटिष् चेष्-
टायाम्' घटते । णिगि "घटादेः०" (४, २, २४) रिति ह्रस्वे घटयति । 'घटण्
सङ्घाते' इति पठितोऽपि सकर्मकार्थविशेषार्थं च पुनरिहायमधीतः ॥ घट्ट-अन्यत्र
घट्टति । इह 'स्टनटौ टान्तौ रुठुलडौ च डान्तौ केचिदधीयते । स्ट-रोटयति,'
अन्यत्र 'रुटि प्रतीघाते' रोटते । नट-नाटयति, अन्यत्र 'नट नृतौ' नटति;

**२१७. वृत** (तान्तः) **२१८. पुथ** (थान्तः) **२१९. नद** (दान्तः) **२२०. वृध** (धान्तः) **२२१. गुप २२२. धूप २२३. कुप** (पान्ताः ३) **२२४. चीव** (वान्तः) **२२५. दशु २२६. कुशु** (शान्तौ) **२२७. त्रसु २२८. पिसु २२९. कुसु २३०. दसु** (सान्ताः ४) **२३१. वर्ह २३२. वृहु २३३. वल्ह २३४. अहु २३५. वहु २३६. महुण्** (हान्ताः ६)+ **भासार्थाः** ॥ परस्मै भाषाः ॥

स्वादावात्मनेपदीति नन्दी नटते । लडु–लण्डयति, अन्यत्र लण्डति । तड–ताडयति, अन्यत्र तडति ॥ ५ ॥

वृत–अन्यत्र 'वृतूङ् वर्तने' वर्तते ॥ पुथ–अन्यत्र 'पुथच् हिंसायाम्' पुथ्यति ॥ नद–अन्यत्र 'णद अव्यक्ते शब्दे' नदति ॥ वृध–अन्यत्र 'वृधूङ् वृद्धौ' वर्धते ॥

अथ पान्तास्त्रयः । गुप–अन्यत्र 'गुपौ रक्षणे' गोपायति ॥ धूप–'धूप सन्तापे' धूपायति ॥ कुप–'कुपच् क्रोधे' कुप्यति ॥ ३ ॥

चीव–अन्यत्र 'चीवृग् सपीवत्' चीवते चीवति ॥ दशु–'दंशं दशने' दशति ॥ कुशु–अन्यत्र कुशति ॥

अथ सान्ताश्चत्वार उदितश्च । त्रसु पिसु कुसु दसु–अन्यत्र क्रमेण त्रसति, पिसति, कुंसति, दंसति ॥ ४ ॥

अथ हान्ताः षट् । वर्ह–अन्यत्र 'वर्हि प्राधान्ये' वर्हते ॥ वृहु–'वृह शब्दे च' वृंहति ॥ वल्ह–'वल्हि प्राधान्ये' वल्हते ॥ अहु–'अहुङ् गतौ' अंहते ॥ वहु महुण्–अन्यत्र 'वहुङ् महुङ् वृद्धौ' वंहते, मंहते । क्रोष्टुकादयः स्वार्थे णिचमुत्पादयन्ति भासार्थश्चेति पारायणम् । भासयति दिशः दीपयति इन्धयति प्रकाशयति । नयान्तरपाठस्त्वेषामात्मनेपदादिकार्थार्थः ॥

+ अत्र 'भाषार्थाः' इति पाठान्तरम् ॥

२३७. युणि जुगुप्सायाम् ॥ [णदन्तः] ॥ २३८. गृणि विज्ञाने ॥ [ऋदन्तः] ॥ २३९. वञ्चिण् प्रलम्भने ॥ [चान्तः] ॥ २४०. कुटिण् प्रतापने ॥ [टान्तः] ॥२४१. मदिण् तृप्तियोगे॥ २४२. विदिण् चेतनाख्याननिवासेषु ॥ [दान्तौ] ॥ २४३. मनिण् स्तम्भे॥ [नान्तः] ॥२४४.वलि २४५. भलिण् आभ-

## ॥ अथात्मनेपदिनः ॥

युणि—इदित्त्वाद् "इङितः" (३, ३, ९२.) इत्यात्मनेपदे, यावयते धर्मं जाल्मः । अन्यत्र 'युङ् मिश्रणे' यौति। 'युंगश् बन्धने' युनीते, युनाति। युजिरयमित्येके, योजयति ॥ गृणि विज्ञाने—विज्ञापने इत्येके । गारयते । अन्यत्र 'गृत् निगरणे' गिरति । 'गृश् शब्दे' गृणाति। कृणीति चन्द्रः । कारयते । अन्यत्र 'कृत् विक्षेपे' किरति ॥ वञ्चिण् प्रलम्भने—प्रलम्भनं मिथ्याफलाख्यानम् । अन्यत्र 'वञ्चू गतौ' वञ्चति । इदित्त्वादेव णिजन्तादात्मनेपदे सिद्धे प्रलम्भे गृधिवञ्चेरिति तद्विधानं णिगन्तादफलवत्कत्रर्थमित्येके ॥ कुटिण्—'कुटत् कौटिल्ये' कुटति ॥

अथ दान्तौ । मदिण् तृप्तियोगे—तृप्तिशोधने इत्यन्ये । तृप्तेः शोधन सम्पत्तिः । 'मदैच हर्षे' माद्यति । हर्षग्लपनयोर्घटादित्वाण्णिगि ह्रस्वे, मदयति ॥ विदिण्—विवादेऽप्यन्ये । प्रवेदयते वादिना । अन्यत्र 'विदक् ज्ञाने' वेत्ति । 'विदिंच् सत्तायाम्' विद्यते । 'विद्लृंती लाभे' विन्दते, विन्दति । 'विदिंप विचारणे' विन्ते ॥ २ ॥

मनिण् स्तम्भे—स्तम्भो गर्वः । मानयते विमानयते वृषलः । पक्षे मनतीति चन्द्रः । अन्यत्र 'मनिच् ज्ञाने' मन्यते । 'मनूयि बोधने' मनुते ॥

अथ लान्तौ । वलि भलिण् आमण्डने—आमण्डनं निरूपणम् । बलिरोष्ठ्यादिः । 'वलि संवरणे' वल्ते । 'भलि परिभाषणादौ' भल्ते ॥ २ ॥

पडने ॥ [लान्तौ] ॥ २४६. दिविण् परिकूजने ॥ [वान्तः] ॥ २४७. वृषिण् शक्तिबन्धे ॥ [षान्तः] ॥ २४८. कुत्सिण् अवक्षेपे ॥ [सान्तः] ॥ २४९. लक्षिण् आलोचने ॥ [क्षान्तः] ॥

[ ॥ अथ आत्मनेपदिन एवार्थान्तरेऽपि चुरादयः ॥ ]

२५०. हिष्कि २५१. किष्किण् हिंसायाम् । २५२. निष्किण् परिमाणे ॥ [कान्ताः] ३ ॥ २५३. तर्जिण् संतर्जने ॥ [जान्तः] १ ॥ २५४. कूटिण् अप्रमादे । २५५.

---

दिविण्—'दिवूच् क्रीडादौ' दीव्यति ॥ वृषिण् शक्तिबन्धे—आवर्षयते ग्रामः शक्तिं बध्नातीत्यर्थः । शक्तिबन्धः प्रजननासामर्थ्यमित्यन्ये । वर्षयते वर्षधरः । तवर्गतुर्यादिरयं सामर्थ्यवारणार्थं इत्येके । धर्षयतेऽरीन् । केचिदिममुदितं णिचोऽनित्यत्वार्थं पठन्ति । तन्मते शक्तिबन्धेऽपि णिचोऽभावादात्मनेपदाभावे, वर्षति । अर्थान्तरे तु 'वृषू सेचने' वर्षति ॥

अथ क्षान्तः । लक्षिण्—'लक्षीण् दर्शनाङ्कनयोः' लक्षयति, लक्षयते । णिचोऽनित्यत्वात्, लक्षते ॥

॥ अथात्मनेपदिन एवाऽर्थान्तरेऽपि चुरादयः ॥

अथ कान्तास्त्रयः । हिष्कि—हिक्कितमिति तु 'हिक्की अव्यक्ते शब्दे' इत्यस्य ॥ ३ ॥

तर्जिण्—यत्तु लक्ष्ये तर्जयतीति परस्मैपदं दृश्यते, तथा भर्त्सयति, निशामयति भालयति कुत्सयति वञ्चयति निवेदयतीत्यादि । तद् भ्वादौ राजृग् टुभ्राजीति पुनर्भ्राजिग्रहणेनात्मनेपदस्याऽनित्यत्वज्ञापनात् सिद्धम् । 'तर्ज भर्त्सने' तर्जति ॥

कूटिण् अप्रमादे– अप्रदाने इत्यन्ये । 'कूटण् दाहे' अदन्तः, कूटयति ॥

त्रुटिण् छेदने ॥ [टान्तौ] २ ॥ २५६. शठिण् श्लाघायाम् ॥ [ठान्तः] १ ॥ २५७. कूणिण् संकोचने । २५८. तूणिण् पूरणे । २५९. भ्रूणिण् *आशायाम् ॥ (णान्ताः ॥३॥) ॥

२६०. चितिण् संवेदने । २६१ वस्ति (तान्तौ ॥२॥) २६२. गन्धिण् अर्दने ॥ [धान्तः] १ ॥ २६३. डपि २६४. डिपि २६५. डम्पि २६६. डिम्पि (पान्ताः ॥४॥) २६७. डम्भि २६८. डिम्भिण् संघाते ॥ [भान्तौ] ॥ २६९. स्यमिण् वितर्के । २७०. शमिण् आलोचने । २७१. कुस्मिण् कुस्मयने ॥ (मान्ताः ॥३॥) ॥

त्रुटिण्—ढान्तोऽयमित्येके । 'त्रुटत् छेदने' त्रुट्यति, त्रुटति ॥
शठिण्—शटेति नन्दी । शलेति कौशिकः । 'शठ कैतवे च' शठति शठः ॥ तूणिण्—तूलेति चन्द्रः ॥ भ्रूणिण् आशायाम्—आशङ्कायामित्येके ॥
चितिण्—'चितै संज्ञाने' चेतते ॥

अथ मान्तास्त्रयः। स्यमिण्—"यमोऽपरिवेषणे०"(४,२,२९) इत्यत्र ण्यधिकारेऽपि णिज्ग्रहणं नियमार्थम् । तेन "अमोऽकम्यमिचमः" (४, २. २६) इति ह्रस्वाभावे, स्यामयते। 'स्यमू शब्दे' स्यमति । णिगि 'अम०"इति ह्रस्वे स्यमयति ॥
शमिण्—'शमूच् उपशमे' शाम्यति । णिगि "शमोऽदर्शने" (४, २, २८) इति ह्रस्वे, शमयति रोगम् ॥ कुस्मिण् कुस्मयने—मतिदृष्टे बुद्ध्युपेक्षितेऽर्थे इत्यन्ये । कुत्सितं स्मयनं कुस्मयनम् । क्ये कुस्मयते । क्विपि णिलुको "न सन्धि ङी०"(७, ४, १११) इति स्थानिवत्त्वप्रतिषेधस्य रकोर्लुक्यभावात्स्थानिवत्त्वे

*. 'आशंसायाम्' इत्यपि पाठः ॥

२७२. गूरिण् उद्यमे । २७३. तन्त्रिण् कुटुम्बधारणे। २७४. मन्त्रिण् गुप्तभाषणे ॥ [रान्ताः] ३ ॥

२७५. ललिण् ईप्सायाम् ॥ [लान्तः] १ ॥ २७६. स्पशिण् ग्रहणश्लेषणयोः । २७७. दंशिण् दशने ॥ [शान्तौ] २ ॥

---

"संयोगस्यादौ०" (२, १, ८८) इति सस्य लुगभावे, संयोगान्तलोपे तु णिलुकि "न सन्धि०" (७, ४, १११) इति स्थानिवत्त्वप्रतिषेधात् "पदस्य" (२, १, ८९) इति मस्य लुकि, सुकुः साधुकुः । कुपूर्वेण स्मिङैव कुस्मयते इति प्रयोगसिद्धेरयंर्थोऽयमिति चेत् ? नैवमिष्टापत्तेः । तथा हि "गतिकन्यस्तत्पुरुषः" (३, १, ४२) इति समासस्य नाम्नैव सह विधानात्तिवाद्यन्तेन सहाभावे "धातोः प्रागुपसर्गः" (३, १, १४८) इति प्राक्त्वानियम इति स्मयतेकु इत्यपि स्यात् । उपसर्गस्य च धातोः पाक्त्वनियमात् कुप्रस्मयते । अडागमस्य च धात्वादित्वात् कोरग्रतः पाते, कस्मयत । क्ये "दीर्घश्च्वी०" (४, ३, १०८)ति दीर्घे कुस्मीयते। क्त्व कुस्मित्य कुप्रस्मित्य इत्यादीनि रूपाणि स्मिङः प्राप्नुवन्ति। अथ कथं कुस्मतीति ? कुपूर्वात् स्मयतेः "क्वचित्" (५, १, १७१) इति डे, कुस्म इवाचरतीति क्विपि क्रियार्थत्वाद्धातुत्वे "शेषात्०" (३, ३, १००) परस्मैपदे भविष्यति । कुस्मनाम्नस्तु णिज्बाहुलकात्सेध्यते ॥ ३ ॥

अथ रान्तास्त्रयः । गूरिण्—'गूरैचि गतौ' गूर्यते ॥ तन्त्रिण् कुटुम्बधारणे—कुटुम्बं परिवारः । उपलक्षणं चैतत् । कुटुम्बेति धातुरिति चान्द्राः । कुटुम्बयते ॥ ३ ॥

ललिण्—'लड विलासे' ऋफिडादित्वाड्डस्य लत्वे, ललति । 'गलिण् स्रावणे' इत्यन्येके, गालयते । 'गल अदने' गलति ॥

अथ शान्तौ । 'पशी बाधनस्पर्शनयोः' । अयं स्पशीत्येके ॥ दंशिण्—'दसुण् भासार्थः' दंशयति । 'दंशं दशने' दशति । 'दाशिण् दाने' इत्यन्येके, दाशयते । 'दाशृग् दाने' दाशते, दाशति ॥ २ ॥

२७८. दंसिण् दर्शने च । २७९. भर्त्सिण् संतर्जने ॥ [सान्तौ] २ ॥ २८०. यक्षिण् पूजायाम् ॥ [क्षान्तः] ॥१॥ ॥ आत्मनेभाषाः ॥

॥ इतोऽदन्ताः ॥

२८१. अङ्कण् लक्षणे । २८२. श्लेष्कण् दर्शने ॥ [कान्तौ] २ ॥ २८३. सुख २८४. दुःखण् तत्क्रियायाम् ॥ [खान्तौ] २ ॥

दंसिण् दर्शने च—चकाराद्दशने । 'दसुण् भासार्थः' दंसयति । अन्यत्र दसति ॥ आत्मनेभाषाः ॥

इतोऽदन्ताः—इत ऊर्ध्वं प्रागदन्तत्वं धातूनां विधीयते, ततश्च "अतः" (४, ३, ८२) इत्यल्लुकः स्थानिवत्त्वाद्गुणवृद्ध्योः समानलोपित्वाच्च सन्वद्भावदीर्घोपान्त्यह्रस्वानामभावः । यथा सुखयति रचयति । अत्र "अतः" (४, ३, ८२) इत्यल्लुकः स्वरादेशत्वेन पूर्वविधिं प्रति स्थानिवत्त्वाद्गुणवृद्ध्यभावः । अररचत्, असुसुखत् । अत्र समानलोपित्वाद् "असमानलोपे०" (४, १, ६३) इति सन्वद्भावो "लघोर्दीर्घ०" (४, १, ६४) इति दीर्घश्च न स्यात् । असुसूचत्, अत्रोपान्त्यह्रस्वाभावः । अङ्कादीनां वृक्षफलाभावेऽपि पूर्वाचार्यानुरोधेनादन्तेषु पाठः । णिजभावेऽनेकस्वरत्वाद्यङ्निवृत्त्यर्थं इत्येके । द्रमिलास्तु एवंप्रकाराणामत्वविधानसामर्थ्यादल्लोपाभावं मन्यन्ते; ततश्च "ञ्णिति" (४, ३, ५०) इति वृद्धौ प्वागमे च दुःखापयति रुज्जापयति वण्टापयति रंहापयति अर्थापयते सत्रापयते गर्वापयते इत्युदाहरन्ति । ते हि "ञ्णिति" (४, ३, ५०) इति वृद्धिं स्वरमात्रस्येच्छन्ति ॥

तत्र कान्तौ । अङ्कण्—अनदन्त एवायमित्येके । 'अकुङ् लक्षणे' अङ्कते । श्लेष्कण्-णिजभावेऽप्यदन्तत्वार्थोऽस्य पाठः । तेनानेकस्वरत्वाद्यङ् न भवति । एवं मूत्रि-रुक्षि-गर्विप्रभृतीनां पाठे प्रयोजनमुन्नेयम् । अनदन्ता एवैते इत्येके ॥ २ ॥

२८५. अङ्गण् पदलक्षणयोः ॥ [गान्तः] १ ॥ २८६. अघण् पापकरणे ॥ [घान्तः] १ ॥ २८७. रचण् प्रतियत्ने । २८८. सूचण् पैशून्ये ॥ [चान्तौ] ॥ २ ॥ ॥

२८९. भाजण् पृथक्कर्मणि । २९०. सभाजण् प्रीतिसेवनयोः । २९१. लज २९२. लजुण् प्रकाशने ॥ (जान्ताः ॥४॥) ॥

२९३. कूटण् दाहे । २९४. पट २९५. वटण् ग्रन्थे । २९६. खेटण् भक्षणे । २९७. खोटण् क्षेपे । २९८. पुटण् संसर्गे । २९९. वटुण् विभाजने ॥ (टान्ताः ॥७॥) ॥

---

अङ्गण्—अस्यापि पूर्वाचार्यानुरोधेनादन्तेषु पाठः ॥ सूचण्—स्मिप्रभृतिभिः साहचर्यादेकस्वराणामेव हि षोपदेशस्मृतिः । अत एव सूत्र-सत्र-सङ्ग्राम-साम-सभाज-स्थूल-स्तन-स्तेन-स्तोम-सुखानामषोपदेशत्वात् सोसूत्र्यते सिसत्रयिषते इत्यादौ न षत्वम् । 'पुन्नाद्यः' (४५५) इति त्रे निपातनात् सूत्रम् ॥ सभाजण्—प्रीतिदर्शनयोरित्यन्ये ॥

अथ टान्ताः सप्त । कूटण् दाहे—आमन्त्रणेऽपीत्येके ॥ पट वटण् ग्रन्थे—ग्रन्थो वेष्टनम् । वटण् विभाजनेऽपीत्यन्ये । 'पट गतौ' पटति । 'पटण् भासार्थः' पाटयति । 'वट वेष्टने' वटति । भिगि परिभाषणे, घटादित्वाद्ध्रस्वे वटयति । 'वटुण् विभाजने' वण्टयति ॥ खेटण्—नायं खेटः, खेड इति देवनन्दी । 'खिट उत्त्रासे' खेटति ॥ खोटण्—डान्तोऽयमिति देवनन्दी । दान्त इत्यन्ये ॥ पुटण्—'पुटत् संश्लेषे' पुटति । 'पुटण् भासार्थः' पोटयति ॥ वटुण्—वण्टयति । वण्टापयतीत्यन्येके । 'वटु विभाजने' वण्टति ॥ ७ ॥

३००. शठ ३०१. श्वठण् सम्यग्भाषणे ॥ [ठान्तौ] २ ॥

३०२. दण्डण् दण्डनिपातने ॥ [डान्तः] ॥

३०३ व्रणण् गात्रविचूर्णने । ३०४. वर्णण् वर्णक्रिया-विस्तार-गुणवचनेषु । ३०५. पर्णण् हरितभावे । ३०६. कर्णण् भेदे । ३०७. तूणण् संकोचने । ३०८. गणण् संख्याने । ३०९. कुण ३१०. गुण (णान्ताः ॥८॥) ३११. केतण् आमन्त्रणे । ३१२. पतण् गतौ वा । ३१३. वातण् गतिसुखसेवनयोः ॥ [तान्ताः] ३ ॥

---

अथ ठान्तौ । शठ श्वठण्—'शठ कैतवे च' शठति । णिगि शाठयति ।
'शठ श्वठ श्वठुण् संस्कारगत्योः' शाठयति, श्वाठयति, श्वण्ठयति ॥ २ ॥

दण्डण्—दण्डादेर्नाम्नो णिचि दण्डयत्यादिसिद्धौ दण्डण्प्रभृतीनां पाठो
यथाभिधान णिचं विनापि प्रयोगार्थः । अन, ण्वादन्तत्वमप्यनेकस्वरकार्यार्थं
फलवत् ॥

अथ णान्ता अष्टौ । व्रणण्—'व्रण शब्दे' व्रणति । णिगि व्राणयति ॥
वर्णण् वर्णक्रिया-विस्तार-गुणवचनेषु—वर्णक्रिया वर्णन वर्णकरणं वा ।
विस्तारे वर्णनेऽयम् । गुणवचन स्तुतिः शुक्लाद्युक्तिर्वा ॥ कुण गुण केतण्
आमन्त्रणे-आमन्त्रणं गूढोक्तिः । 'कुणत् शब्दोपकरणयोः' कुणति ॥ ८ ॥ 'केतण्
निश्रावणनिमन्त्रणयो'-रपीत्येके ॥ पतण् गतौ वा—वाशब्दो णिजदन्तत्वयो-
र्युगपद्विकल्पार्थः । 'पत्लृ गतौ' पतति, अपप्तत् ॥ वातण् गतिसुखसेव-
नयोः—सुखसेवनयोरित्येके । नायं वातः, किन्तु 'वा' इत्येके; वापयति
निर्वाप्य गतः ॥ 'वांक गतिगन्धनयोः' वाति ॥ ३ ॥

३१४. कथण् वाक्यप्रबन्धे । ३१५. श्रथण् दौर्बल्ये ॥ [थान्तौ] २ ॥ ३१६. छेदण् द्वैधीकरणे । ३१७. गदण् गर्जे ॥ [दान्तौ] २ ॥ ३१८. अन्धण् दृष्ट्युपसंहारे ॥ [धान्तः] १ ॥

३१९. स्तनण् गर्जे । ३२०. ध्वनण् शब्दे । ३२१. स्तेनण् चौर्ये । ३२२. ऊनण् परिहाणे ॥ [नान्ताः] ४ ॥

३२३. कृपण् दौर्बल्ये । ३२४. रूपण् रूपक्रियायाम् । ३२५. क्षप [पान्ताः ॥३॥] ३२६. लाभण् प्रेरणे ॥ [भान्तः] १ ॥

---

अथ थान्तौ । कथण् वाक्यप्रबन्धे—वाक्यप्रतिबन्धे इत्यन्ये । प्रतिबन्धो विच्छेदोदीरणात् । वदने इत्यपरे । कथयति । कथमचीकथत्? भूरिदाक्षिण्यसम्पन्नं यश्वं सान्त्वमचीकथ इति प्रयोगं दृष्ट्वा ये गणयतेरन्यस्यापि पूर्वस्येत्वमिच्छन्ति तन्मते भविष्यति, प्रकृत्यन्तरं वान्वेष्यम् ॥ श्रथण्—श्रथयति । क्रुफिदादित्वाल्लत्वे, श्लथयति । 'श्रथण् प्रतिहर्षे' श्राथयति । 'श्रथण् बन्धने च' "युजादेर्नवा" (३. ४. १८) इति वा णिचि, श्राथयति श्रथति । 'श्रथुङ् शैथिल्ये' श्रन्थते ॥ २ ॥

गदण् गर्जे—गर्जो मेघशब्दः । 'गद व्यक्तायां वाचि' गदति ॥

अथ नान्ताश्चत्वारः । स्तनण् गर्जे—गर्जो मेघशब्दः । 'स्तन शब्दे' स्तनति ॥ ध्वनण्—ध्वनति । णिगि शब्दादन्यत्र घटादित्वाभावे ध्वानयति ॥४॥

अथ पान्तास्त्रयः । कृपण्—कृपयति । 'कृपौङ् सामर्थ्ये' कल्पते । 'कृपण् अवकल्कने' कल्पयति ॥ रूपण् रूपक्रियायाम्—रूपक्रिया राजमुद्रादिरूपस्य करणम् । रूपदर्शनं वा रूपक्रिया ॥ ३ ॥

३२७. भामण् क्रोधे। ३२८. गोमण् उपलेपने। ३२९. सामण् सान्त्वने। ३३०. श्रामण् आमन्त्रणे। ३३१. स्तोमण् श्लाघायाम् ॥ [मान्ताः] ५ ॥

३३२. व्ययण् वित्तसमुत्सर्गे ॥ [यान्तः] १ ॥ ३३३. सूत्रण् विमोचने। ३३४. मूत्रण् प्रस्रवणे। ३३५. पार ३३६. तीरण् कर्मसमाप्तौ। ३३७. कत्र ३३८. गात्रण् शैथिल्ये। ३३९. चित्रण् चित्रक्रिया-कदाचिद्दृष्ट्योः। ३४० छिद्रण् भेदे। ३४१. मिश्रण् संपर्चने। ३४२. वरण् ईप्सायाम्। ३४३. स्वरण् आक्षेपे। ३४४. शारण्

लाभण्—लभणिति सभ्याः। 'दुर्लभिप् प्राप्तौ' लभते। णिगि लम्भयति ॥
अथ मान्ताः पञ्च। भामण्—'भामि क्रोधे' भामते ॥ सामण्
सान्त्वने—सान्त्वनं प्रीणनम्। अणोपदेशत्वाण्णत्वाभावे सिसामयिषति ॥ ५ ॥
व्ययण् वित्तसमुत्सर्गे—वित्तसमुत्सर्गस्त्यागः। 'व्ययी गतौ' व्ययते,
व्ययति ॥
अथ रान्तास्त्रयोदश। सूत्रण् विमोचने—विमोचनं मोचनाभावः,
ग्रन्थनमिति यावत् ॥ कत्र—कर्त्रणित्येके। चन्द्रस्तु कर्तृणिति ऋदितं मन्यते।
कर्तयति। कत्थणिति देवनन्दी। कत्थयति ॥ चित्रण्—चित्रयति आलेख्य
करोति, कदाचिच्चित्रयति चेत्यर्थः। वैचित्र्यकरणार्थोऽयं न चित्रक्रियार्थ इत्यन्ये।
तन्मते चित्रयति वैचित्र्यं सम्पादयति कदाचित्पश्यति चेत्यर्थः ॥ मिश्रण
सम्पर्चने—सम्पर्चनं श्लेषः ॥ स्वरण्—आक्षेपादन्यत्र 'श्वृ शब्दोपतापयोः।
स्वरति ॥ शारण—[illegible] ...रिः। शारेति नन्दी ॥

दौर्बल्ये । ३४५. कुमारण् क्रीडायाम् ॥ (गाणाः ॥११॥) ॥

३४६. कलण् संख्यानगत्योः । ३४७. शीलण् उपधारणे । ३४८. वेल ३४९. कालण् उपदेशे । ३५०. पल्यूलण् लवनपवनयोः ॥ (गाणाः ॥५॥) ॥ ३५१. अंशण् ७समाघाते ॥ [गाण.] १ ॥ ३५२. पपण् अनुपसर्गः । ३५३. गवेपण् मार्गणे । ३५४. मृपण् क्षान्तौ ॥ (गाणाः ॥३॥) ॥

कुमारण्—कुमारयति । अपि कुमार, कुर्वन्तो [illegible], कुमारो [illegible] "[illegible] (१०९ उणा०) [illegible] वा कुमारः । [illegible], कुमारयति [illegible]

अथ [illegible] । कलण्—'कलि [illegible]' [illegible] । '[illegible] [illegible]' [illegible] ॥ शीलण् उपधारणे—[illegible] [illegible] '[illegible]' शीलयति । वेल—'वेलृ [illegible]' वेलति ॥ [illegible]—[illegible] [illegible] ॥ पल्यूलण्—पल्यूलयति । [illegible] । [illegible]

अंशण् समाघाते—समाघातो [illegible] । [illegible] । [illegible] [illegible] ॥

३५५. रसण् आस्वादन-स्नेहनयोः । ३५६. वासण् उपसेवायाम् । ३५७. निवासण् आच्छादने ॥ (सान्ता ॥३॥) ॥

३५८. चहण् कल्कने । ३५९. महण् पूजायाम् । ३६०. रहण् त्यागे । ३६१. रहुण् गतौ । ३६२. स्पृहण् ईप्सायाम् ॥ (हान्ता ॥५॥) ॥

३६३. रूक्षण् पारुष्ये ॥ [क्षान्त] १ ॥ परस्मैभाषा ॥
[ अथाऽदन्तेष्वेव कुहणिमभिव्याप्यात्मनेपदिनः ॥ ]
३६४. मृगणि अन्वेषणे । ३६५. अर्थणि उप-

---

अथ सान्तास्त्रय । रसण-'रस शब्दे' रसति ॥ वासण-'वस निवासे' वसति । 'वसिक् आच्छादने' वस्ते । 'वसण् स्नेहादौ' वासयति ॥ निवासण्-'वासण उपसेवायाम्' निपूर्वस्य हे न्यववासत् ॥ ३ ॥

अथ हान्ता पञ्च । चहण् कल्कने—कल्कन दम्भ । 'चह कल्कने' चहति ॥ महण्-'मह पूजायाम्' महति ॥ रहण्-'रह त्यागे' रहति ॥ णिगि राहयति ॥ रहुण्-अदन्तत्वाद् "अत" (४, २ ८२) इति लुकं बाधित्वानु पान्त्यस्याप्यतो 'ञ्णिति" (४, ३, ५०) इति वृद्धौ 'अर्तिरी०' (४ २, २१) इति पौ, रहापयति । 'रहु गतौ' रहति ॥ स्पृहण्—"स्पृहेर्व्याप्यं वा" (२, २, २६) इति व्याप्यस्य वा सम्प्रदानत्वे, पुष्पेभ्य स्पृहयति । अकर्मकत्वाद् "गत्यर्थाकर्मक०" (५, १, ११) इति कर्त्तरि क्ते, पुष्पेभ्य स्पृहितो मैत्र । पक्षे पुष्पाणि स्पृहयति । कर्मणि क्ते, पुष्पाणि स्पृहितानि चैत्रेण ॥५॥

अथादन्तेष्वेव कुहणिमभिव्याप्यात्मनेपदिन'—

अर्थणि—पूर्वाचार्यानुरोधाददन्तेष्वस्य पाठ । एव सत्रिगव्योरपि ।

याचने । ३६६. पदणि गतौ । ३६७. संग्रामणि युद्धे । ३६८. शूर ३६९. वीरणि विक्रान्तौ । ३७०. सत्रणि संदानक्रियायाम् । ३७१. स्थूलणि परिबृंहणे । ३७२. गर्वणि माने । ३७३. गृहणि ग्रहणे । ३७४. कुहणि विस्मापने ॥ आत्मनेभाषाः ॥ अवसिता अदन्ताः ॥

## [अथ विकल्पितणिचो युजादयः॥]

३७५. युजण् संपर्चने ॥ १ ॥ ३७६. लीण् द्रवीकरणे।

---

केचित्त्वदन्तपाठबलादतो लुकं बाधित्वाऽनुपान्त्यस्यापि "ञ्णिति" (४, ३, ५०) इति वृद्धौ "अर्तिरी०" (४, २, २१) इति पौ, अर्थापयते, सत्रापयते, गर्वा-पयते इत्याहुः । हे आर्तियत ॥ पदणि-'पदिंच् गतौ' पद्यते। णिगि उपपाद-यति ॥ सङ्ग्रामणि-अयं परस्मैपदीत्येके ॥

अथ रान्ताद्वयः । शूर-'शूरैचि स्तम्भे' शूर्यते ॥ सत्रणि संदान-क्रियायाम्—सन्तानक्रियायामित्येके ॥ २ ॥

स्थूलणि परिबृंहणे—परिबृंहणं पीनत्वम् ॥ गर्वणि—'गर्व दर्पे' गर्वति ॥ कुहणि-भिदादयङि, कुहा नाम नदी। "णि वेत्यास०" (५, ३, १११) इत्यने कुहना दम्भः ॥ अवसिता अदन्ताः ॥

युजण्—"युजादेर्नवा" (३, ४, १८) इति वा णिचि, योजयति । पक्षे न्याय्यविकरणः शव्, योजति। 'युजिंच् समाधौ' युज्यते । 'युजूंपी योगे' युङ्क्ते, युनक्ति । इह युजादीनां नियतो णिज्विकल्पश्चुरादीनां तु यथादर्शनं णिजनित्य इत्युक्तमेव ॥

---- ईदन्ताद्वयः । लीण्-"लीयो नोन्तः स्नेहद्रवे" (४, २, १५)

**३७७. मीण् मतौ। ३७८. प्रीगण् तर्पणे ॥(ईदन्ताः ॥२॥)॥ ३७९. धूगण् कम्पने ॥ [ऊदन्तः] १॥ ३८० वृगण् आवरणे ॥ [ऋदन्तः] १ ॥ ३८१. जॄण् वयोहानौ ॥[ॠदन्तः] १॥ ३८२. चीक ३८३. शीकण् आमर्षणे ॥ [कान्तौ] २ ॥ ३८४. मार्गण् अन्वेषणे ॥ [गान्तः] १ ॥**

इति नेऽन्ते घृतं विलीनयति । पक्षे "नामिनोऽकलिहलेः" (४, ३, ५१) इति वृद्धौ, विलाययति । पक्षे "अर्तिरी०" (४, २, २१) इति पौ, विलापयति । णिजभावे, विलयति लयति । 'लींङ्च् श्लेषणे' लीयते । 'लींश् श्लेषणे' क्लिनाति ॥ मीण् मतौ-मतिर्मननम् । गतावित्यन्ये । 'मींङ्च् हिंसायाम्' मीयते । 'मींग्श् हिंसायाम्' मीनाति, मीनीते ॥ प्रीगण्-णित्त्वस्य णिजभावे फलवत्कर्त्रयात्मनेपदार्थत्वाण्णिचि "धूग्प्रीगोर्नः" (४, २, १८) इति नेऽन्ते, "शेषात्परस्मै" (३, ३, १००) इति परस्मैपदे, प्रीणयति । क्र्यादेरेव नमिच्छन्त्येके । तन्मते "नामिन०" (४, ३, ५१) इति वृद्धौ, प्राययति । पक्षे प्रयते प्रयति । 'प्रींङ्च् प्रीतौ' प्रीयते । 'प्रींग्श् तृप्तिकान्त्योः' प्रीणीते प्रीणाति ॥

धूगण्-"धूग्प्रीगोर्नः" (४, २, १८) इति ने, धूनयति । नं नेच्छन्त्येके, धावयति । पक्षे णित्त्वात्फलवत्कर्त्रयात्मनेपदम् । अन्यत्र तु "शेषाद्०" (३, ३, १००) इति परस्मैपदम्, धवते धवति । 'धूगट् कम्पने' धूनुते धूनोति । 'धूत् विधूनने' धुवति । 'धूग्श् कम्पने' धुनीते धुनाति ॥ वृगण्-वारयति । पक्षे वरते वरति । 'वृगट् वरणे' वृणुते वृणोति । 'वृङ्श् सम्भक्तौ' वृणीते ॥ जॄण्-जारयति । पक्षे जरति । जीति नन्दी, ज्रापयति ज्रयति । 'जॄष्च् जरसि' जीर्यते । 'जॄश् वयोहानौ' जृणाति ॥

अथ कान्तौ । शीकण्-ताच्छयादिरयम् । 'शीकृङ् सेचने' शीकते ॥२॥

**३८५. पृचण् संपर्चने। ३८६. रिचण् वियोजने च। ३८७. वचण् भाषणे। ३८८. अर्चिण् पूजायाम्॥ [चान्ताः] ४॥ ३८९. वृजैण् वर्जने। ३९०. मृजौण् शौचालङ्कारयोः॥ [जान्तौ] २॥ ३९१. कठुण् शोके॥ [ठान्तः॥१॥]॥ ३९२. श्रन्थ ३९३. ग्रन्थण् संदर्भे। ३९४. क्रथ ३९५. अर्दिण् हिंसायाम्।**

---

अथ चान्ताश्चत्वारः। पृचण्—'पृचैङ्क् सम्पर्चने' सम्पृक्ते। 'पृचैप् सम्पर्के' सम्पृणक्ति॥ रिचण् वियोजने च-चकारात्सम्पर्चने। 'रिचृंपी विरेचने' रिङ्क्ते रिणक्ति॥ वचण् भाषणे—सन्देशने इत्येके। यजादीत्यत्र यौजादिकस्याऽग्रहणाद् य्वृदभावे वचे, वच्यते। 'वचंक् भाषणे' वक्ति। वचे उच्यते॥ अर्चिण्—'अर्च पूजायाम्' अर्चति॥ ४॥

वृजैण्—घञि वर्गः। 'वृजैकि वर्जने' वृक्ते॥ मृजौण्—"मृजोऽस्य वृद्धिः" (४, ३, ४२) इति वृद्धौ, मार्जयति। पक्षे मार्जति। औदित्वादेट् मार्जिता मार्ष्टा। 'मृजौक् शुद्धौ' मार्ष्टि॥ कठुण्—'कठुङ् शोके' कण्ठते, उत्कण्ठते॥

अथ थान्ताश्चत्वारः। श्रन्थ ग्रन्थण् संदर्भे-सदर्भो बन्धनम्। 'श्रथुङ् शैथिल्ये' श्रन्थते। 'ग्रथुङ् कौटिल्ये' ग्रन्थते। श्रन्थश् मोचनप्रतिहर्षयो' श्रथ्नाति। 'ग्रन्थश् सदर्भे' ग्रथ्नाति॥ क्रथ-क्रथ हिंसार्थः। णिगि घटादित्वाद्ध्रस्वे चौरमुत्क्रथयति॥ ४॥

अथ लाघवार्थं थान्तमध्ये एवार्थानुगुण्येन दान्तः। अर्दिण्-इदित्वादस्य णिजभावे आत्मनेपदे न सार्थकत्वाण्णिचि "शेषात्०" (३, ३, १००) इति परस्मैपदे, अर्दयति अर्दते। परस्मैपदमित्येके। अर्दति। 'अर्द गतियाचनयोः' अर्दति॥

३९६. ग्रथण् बन्धने च ॥ (थान्ताः ॥४॥) ॥ ३९७. वदिण् भाषणे । ३९८. छदण् अपवारणे । ३९९. आङः सदण् गतौ । ४००. छृदण् संदीपने ॥ (दान्ताः ॥४॥) ॥ ४०१. शुन्धिण् शुद्धौ ॥ [धान्तः] १ ॥ ४०२. तनूण् श्रद्धाघाते । उपसर्गाद्दैर्घ्ये । ४०३. मानण् पूजायाम् ॥ (नान्तौ ॥२॥) ॥

ग्रथण् बन्धने च-चकाद्धिंसायाम् । मोक्षणे इत्येके । अथ ग्रन्थण् हिंसाया-मित्यन्ये ॥ ४ ॥

अथ दान्ताश्चत्वारः । वदिण् भाषणे—संदेशने इत्यन्ये । वादयति, संवादयति, पक्षे वदते । 'वद व्यक्तायां वाचि' वदति । यजादित्वाद् उद्यते ॥ छदण्—'छदण् संवरणे' । ऊर्जने घटादित्वाद्ध्रस्वे, छदयति ॥ आङः सदण् गतौ-आङः परः 'सद' इत्ययं धातुर्गतावर्थे युजादिः । आसादयति, आसीदति । आसदतीत्येके । अनुस्वारेत्वादेडित्यन्ये, आसत्ता, आसात्सीत् । 'षद्लृं विशरणादौ' असदत् ॥ आङोऽन्यत्र सीदति । गतेरन्यत्र सीदति । छृदण्—"कृत-चृत-नृत-च्छृद-तृदोऽसिचः सादेर्वा" (४, ४, ५०) इत्यत्र तृदसाहचर्येण रुधादेरेव ग्रहणात् सादौ इड्विकल्पाभावे, छर्दिष्यति । ऐदित्वमित्येके । 'उछृदृपी दीप्तिदेवनयोः छृन्ते, छृणत्ति ॥ ४ ॥

शुन्धिण् शुद्धौ—अनिदिदित्येके, शुन्धति । 'शुधंच् शौचे' शुध्यति ॥

अथ नान्तौ । तनूण् श्रद्धाघाते—श्रद्धोपकरणयोरित्यन्ये । 'तनूयी विस्तारे' तनुते तनोति । क्ते ततः । उपसर्गाद्दैर्घ्ये—उपसर्गपूर्वस्तनू दैर्घ्येऽर्थे युजादिः । आतानयति वितानयति प्रतानयति, आतनति वितनति प्रतनति । अन्यत्र तनोति । तन श्रद्धोपहिंसनयोरिति चान्द्रं पारायणम् ॥

मानण्-अयं मनणित्येके । 'मानि पूजायाम्' मीमांसते ॥ २ ॥

**४०४. तपिण् दाहे । ४०५ तृपण् प्रीणने । ४०६. आप्लृण् लम्भने ॥ (पान्ताः ॥३॥) ॥ ४०७. दृभैण् भये ॥ [भान्तः] १.॥ ४०८. ईरण् क्षेपे ॥ [रान्तः] १ ॥ ४०९. मृषिण् तितिक्षायाम् । ४१०. शिषण् असर्वोपयोगे । विपूर्वोऽतिशये । ४११. जुषण् परितर्कणे । ४१२. धृषण् प्रसहने ॥ (षान्ताः ॥ ४ ॥) ॥**

अथ पान्तास्त्रयः । तपिण्–'तपं सन्तापे' तपति । 'तपिच् ऐश्वर्ये वा' तप्यते ॥ तृपण् प्रीणने—सन्दीपने इत्येके । अयं 'चृतण् छृपण् संदीपने' इत्येके । 'दृपौच् हर्षमोहनयोः' दृप्यति । 'तृपौच् प्रीतौ' तृप्यति । 'तृपट् प्रीणने' तृप्नोति ॥ आप्लृण् लम्भने—लम्भनं प्राप्तिः । 'आप्लृंट् व्याप्तौ' आप्नोति ॥ ३ ॥

दृभैण्–ऐदित्वात् क्तयोर्नेट्, दृब्धः दृब्धवान् । 'दृभैम् ग्रन्थे' दृभति ॥ ईरण् क्षेपे—गतावित्येके । क्षेपः प्रेरणम् । 'ईरिक् गतिकम्पनयोः' ईर्ते ॥

अथ षान्ताश्चत्वारः । मृषिण्—मर्षयति, मर्षते । 'मृषू सहने च' मर्षति । 'मृषीच् तितिक्षायाम्' मृष्यते, मृष्यति । 'मृषण् क्षान्तौ' अदन्तः मृषयति । णिचोऽनित्यत्वात् मृषति अदन्तत्वाच्च गुणः । अंचि-शुन्धि-अर्दि-तपि-वदि-मृषयः षडपि परस्मैपदिन इति भीमसेनीयाः ॥ शिषण् असर्वोपयोगे–असर्वोपयोगोऽनुपयुक्तत्वम् । 'शिष्लृंप् विशेषणे' शिनष्टि । विपूर्वोऽतिशये–अतिशय उत्कर्षः । विपूर्वः शिषिरतिशये युजादिः ॥ जुषण् परितर्कणे–परितर्पणे इत्येके । 'जुषैति प्रीतिसेवनयोः' जुषते ॥ धृषण्–प्रसहनमभिभवः आदिदयमित्येके, तन्मते 'न वा भावारम्भे' (४, ३, ७२) इति क्तयोर्वेट्, प्रधृष्टमनेन । 'ञिधृषाट् प्रागल्भ्ये' धृष्णोति ॥ ४ ॥

**४१३. हिसुण् हिंसायाम् ॥ [सान्त] १ ॥ ४१४. गर्हण् विनिन्दने । ४१५. पहण् मर्षणे ॥ [हान्तौ] २ ॥ वहुलमेतन्निदर्शनम् ॥ १ ॥ [वृत् युजादि] ॥**

हिसुण्—'हिसुप हिंसायाम्' हिनस्ति ॥ गर्हण्—'गर्हि कुत्सने' गर्हते ॥ पहण्—'षहि मर्षणे' सहते ॥ २ ॥

वहुलमेतन्निदर्शनम्–यदेतद् भवत्यादिधातुपरिगणन तद्बाहुल्येन निदर्शनत्वेन ज्ञेयम् । तेनात्राऽपठिता अपि 'कुवि' प्रभृतयो लौकिका, स्तम्भूप्रभृतय सौत्राश्चुलुम्पादयश्च वाक्यकारणीया धातव उदाहार्या । वर्धते हि,धातुगण । यदुक्तम्—

"मिलन्त्याशासु जीमूता, विह्वयन्ते दिवि ग्रहा ।
उपक्षपयति प्रावृट, क्षीयन्ते कामिविग्रहा ॥ १ ॥ इत्यादि ।
मुसलक्षेपहुकारस्तोभैं फलमखण्डिनि ।
कुचविष्कम्भमुत्तम्भन्निस्कुम्भातीव ते स्मर. ॥ १ ॥
नीपानन्दोलयत्वेप, प्रेङ्खोलयति मे मन ।
पवनो वीजयन्नाशा, ममाशामुन्चुलुम्पति ॥ २ ॥
तावत्खर प्रखरमुल्लुलयाचकार ॥ "

यद्वा भूवादिगणाद्युक्तोत्ता स्वार्थणिजन्ता अपि वहुल भवन्ति । चुरादिरस्तु निदर्शनार्थं । यदाहु —

' निवृत्तप्रेषणाद्धातो प्राकृतेऽर्थे णिजिष्यते ॥ " लक्ष्यम्–'रामो राज्यमकारयत्' अकरोदित्यर्थं । रञ्जयति वस्त्रम् रजतीत्यर्थं । भेदयति कुल्यान्, भिनत्तीत्यर्थं । यद्वा प्रयोज्यव्यापारेऽपि प्रयोक्तृव्यापारानुप्रवेशो णिग विनापि क्रियारोपाद्बहुल भवति ।

"जजान गर्भं मघवा इन्द्र " अजीजनदित्यर्थं । "पञ्च द्वादशधा जज्ञे" जनितमित्यर्थं. । "पड्भिर्हैरै कृपति" कर्षयतीत्यर्थं ।

## ॥ इत्याचार्यश्रीहेमचन्द्रानुस्मृताश्चुरादयो णितो धातवः ॥ ९ ॥ (?)

॥ इति आदिसूत्रं समाप्तम् ॥ छ (?) ॥

॥ सं(वत्) १५१६ वर्षे, जेठ शुदि ९, वार बुधे ॥

॥ म० राजालखितमस्ति (?) ॥ छ ॥

---

" यान्ति पर्णशुषो वाता यान्ति पर्णमुचोऽपरे ।
यान्ति पर्णरुहोऽप्यन्ये, ततो देव प्रवर्षति ॥ १ ॥ इति "

अथवा "णिज्बहुलं नाम्नः कृगादिषु" (३, ४, ४२) इत्येव सिद्धेऽत्र सूत्रच्छिदान्धदण्डादय उदाहरणार्थाः । तेनाऽदन्तेष्वनुक्ता अपि बहुलं द्रष्टव्याः । तेन 'स्कन्ध समाहारे' 'ऊष तुरणे' 'स्फुट मरुद्भावे' 'वस निवासे' इत्यादयोऽपि भवन्ति । तथा ओजयत्योज ।

तडित्स्वयतीवाशा ॥
पांसुर्दिशा मुखमतुत्थयदुत्थितोद्र ॥ इति ।

॥ समर्थित चेद् धातुपारायणमिति ॥

इत्याचार्यश्रीविजयनेमिसूरिपट्टालङ्कारविजयलावण्यसूरिशिष्येण मुनिदक्षविजयेन विरचित पुटितटिप्पणिकानुसन्धानं समाप्तम् ॥

॥ ॐ शान्तिः ॥



॥ ॐ अर्हं नमः ॥

# ॥ अथ कण्ड्वादिः ॥

१. कण्डूग् ॥ [ऊदन्तः १] ॥

श्रीस्याद्यन्तरत्नाकरादिकर्तृ-मुनिश्रीदक्षविजयप्रणीतः

## कण्ड्वादिप्रकाशः

[ स्रग्धरावृत्तम् ]

नामं नामं जिनेन्द्रं विबुधपतिनतं सार्वसार्वेशवाचं ।
सूरीशं हेमचन्द्रं सुगुणगणनिधिं नेमिसूरिप्रकाण्डम् ॥
श्रीमल्लावण्यसूरिं निजगुरुप्रवरं सर्वतन्त्रस्वतन्त्रं
श्रीकण्ड्वादिप्रकाशं स्वपरहितकृते दक्षसाधुः करोति ॥ १ ॥

द्विविधा. कण्ड्वादय., धातवो नामानि च। तत्र धातुत्वं "धातोः कण्ड्वादेर्यक्" (३. ४. ८) इति सूत्रे धातुग्रहणाद् यकः कित्वाच्चावसीयते। नामत्वं तु केषाञ्चित् कण्ड्वादीनां दीर्घान्तपाठात्। कण्डूयते इत्यादि रूपं तु मन्तूयतीतिवत् "दीर्घश्च्वि-यङ्-यक्-क्येषु च" (४. ३. १०८) इति भविष्यति। यदाहु. कलिकालसर्वज्ञाः श्रीमन्तो भगवन्तो हेमचन्द्रसूरीशाः—

॥ इत्याचार्यश्रीहेमचन्द्रानुस्मृताश्चुरादयो णितो

धातवः ॥ ९ ॥ (?)

॥ इति आदिसूत्रं समाप्तम् ॥ छ (?) ॥

॥ सं(वत्) १५१६ वर्षे, जेठ शुदि ९, वार बुधे ॥

॥ म० राजालखितमस्ति (?) ॥ छ ॥

---

" वान्ति पर्णशुषो वाता वान्ति पर्णमुचोऽपरे ।
वान्ति पर्णरुहोऽप्यन्ये, ततो देव प्रवर्षति ॥ १ ॥ इति "

अथवा "णिज्बहुल नाम्न कृगादिषु" (३, ४, ४२) इत्येव सिद्धेऽत्र सूत्रच्छिद्रान्धदण्डादय उदाहरणार्थां । तेनाऽदन्तेष्वनुक्ता अपि बहुल इष्टया । तेन 'स्कन्ध समाहारे' 'क्षप क्षुरणे' 'स्फुट प्रकटभावे' 'वस निवासे' इत्यादयोऽपि भवन्ति । तथा ओजयत्योज ।

तडित्प्रचयतीपाशा ॥

पांसुर्दिशा मुखमतुत्थयदुत्थितोद्रे ॥ इति ।

॥ समर्थित चेद् धातुपारायणमिति ॥

इत्याचार्यश्रीविजयनेमिसूरिपट्टालङ्कारविजयलावण्यसूरिशिष्येण मुनिदक्षविजयेन विरचित मुद्रितटिप्पणिकानुसन्धानम् समाप्तम् ॥

॥ ॐ शान्तिः ॥



॥ ॐ अर्हं नमः ॥

# ॥ अथ कण्ड्वादिः ॥

१. कण्डूग् ॥ [उदन्तः १] ॥

श्रीस्याद्यन्तरत्नाकरादिकर्तृ-मुनिश्रीदक्षविजयप्रणीतः

## कण्ड्वादिप्रकाश

[ स्रग्धरावृत्तम् ]

नामं नामं जिनेन्द्रं विबुधपतिनतं सार्वसार्वेश्वराच्यं ।
सूरीशं हेमचन्द्रं सुगुणगणनिधिं नेमिसूरिप्रकाण्डम् ॥
श्रीमल्लावण्यसूरिं निजगुरुप्रवरं सर्वतन्त्रस्वतन्त्रं
श्रीकण्ड्वादिप्रकाशं स्वपरहितकृते दक्षसाधुः करोति ॥ १ ॥

द्विविधाः कण्ड्वादयः, धातवो नामानि च । तत्र धातुत्वं "धातोः कण्ड्वादेर्यक्" (३. ४. ८) इति सूत्रे धातुग्रहणाद् यकः क्रित्वाच्चावसीयते । नामत्वं तु केषाञ्चित् कण्ड्वादीनां दीर्घान्तपाठात् । कण्डूयते इत्यादि रूपं तु मन्तूयतीतिवत् "दीर्घश्च्वि–यङ्–यक्–क्येषु च" (४. ३. १०८) इति भविष्यति । यदाहुः कलिकालसर्वज्ञाः श्रीमन्तो भगवन्तो हेमचन्द्रसूरीशाः—

"इह केचित् कण्ड्वादयः क्रियामाहुः केचिदक्रियाम् । तथा हि–कण्डूयतीति पूर्वाऽपरीभूता साधनाकाङ्क्षिणी क्रिया गात्रविकर्षणलक्षणा प्रतीयते, कण्डूरिति च निरस्तक्रमा साधननिरपेक्षा वेदना, यामपनेतुं कण्डूयतीति । यल्लक्ष्यम्–'गात्रे मे कण्डूरुदिता' इत्यादि । ननु च यदीमे कण्ड्वादयः साध्यमानरूपां साधनसम्बधिनीति प्रक्रतां क्रियामाहुस्तदा धातव एव, क्रियार्थत्वात्; नह्येवं रूपस्याऽधातुत्वं सम्भवति, विरोधात् । अथ नैवंरूपाः, संहृतक्रमां साधननिरपेक्षां सिद्धरूपां द्रव्यात्मानमवस्थामाहुर्न तर्हि धातवः, न हि अक्रियावचनो धातुर्भवति । न चैकस्योभयरूपता सम्भवति, विरोधात्; न हि क्रियां ब्रुवन्नक्रियां ब्रवीतीतिचेद् ? उच्यते,–नन्वेकस्मिन्निर्विभागे विशेषात्मनि उभयरूपता सम्भवति, अविशेषात्मनि तु अनेकविशेषात्मकत्वात् सम्भवति, क्वचित् कदाचित् कस्यचिदर्थस्याभिधानात् । एवंरूपमेव चाश्रित्य 'एकः शब्दोऽनेकार्थः' इति व्यवह्रियते इत्यदोषः ॥"

एवं कण्ड्वादीनां धातु–नामभेदाद् द्वैविध्येऽपीयं व्यवस्था, धातुरूपेभ्य कण्ड्वादिभ्यो यकि त्यादौ च कण्डूयतीत्यादि, नामरूपेभ्यः कण्ड्वादिभ्यस्तु धातुत्वाभावाद् यक् न भवति, किन्तु एकत्वादिमदर्थवृत्तित्वात् स्यादौ 'कण्डूः कण्ड्वौ' इत्यादि भवति ॥

ननु नामरूपेभ्य. कण्ड्वादिभ्य इतेऽपि यकि न कश्चिद्दोष., तथा हि–यकि क्विप्करणे "अतः" (४, ३, ८२) इत्यकारलोपे "योऽशिति" (४, ३, ८०) इति यकारलोपे च कण्डूरिति सिद्ध्यति, एवं च "धातोः कण्ड्वादेर्यक्" (३. ४. ८) इति सूत्रे धातुग्रहणं तत्प्रतिसन्धानं वा न विधेयमिति चेत् ? न, क्विप् प्रत्यय एव न सम्भवति, स हि धातोर्भवति, नाम्नथाऽक्रियावचनत्वेन धातुत्वाऽभावात् । न हि स्वार्थिको यक् क्रियामभिधातुं शक्नोति ॥

धातुत्वेऽपि 'कण्डूवौ कण्डुव' इत्यादौ "संयोगात्" (२. १. ५२) इत्युवादेशे 'कण्डुवौ कण्डुव' इत्यनिष्टमापद्येत, यथा कटप्रुवौ कटप्रुव इति । मन्तुरित्यत्र च यकि "दीर्घश्च्वि-यङ् यक् क्येषु च" (४. ३ १०८) इति दीर्घत्वे मन्तूरित्यनिष्टमापद्येत, दीर्घाभावेऽपि "ह्रस्वस्य त पित्कृति" (४. ४. ११३) इति तोऽन्त स्यात्, तथा च 'मन्तुत्' इत्यनिष्टमापद्येत । किञ्च क्विप् "कर्त्तरि" (५. १. ३) इति कर्त्तरि स्यात्, ततश्च क्विबन्ताद् वेदनामात्रप्रतीतिर्न स्याद्, अपि तु वेदनाकर्त्तुं । यदि "क्रुध्-सम्पदादिभ्य क्विप्" (५ ३. ११४) इत्यत्र कण्ड्वादिगणस्य पाठमभ्युपगम्य भावे क्विप् विधीयेत, तदा वेदनामात्रप्रतीतिः सम्भवति, तथाऽपि 'कण्डूया मन्तूया' इत्यत्र "शंसि प्रत्ययात्" (५. ३. १०५) इति 'अ' प्रत्ययो यो भवति स न स्यात्, 'यस्मिन् प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायाद्,' अस्मिन् प्राप्ते "क्रुध्-सम्पदादिभ्य क्विप्" (५. ३. ११४) इति क्विप् स्याद्, न तु 'अ' प्रत्यय । अतोऽपि, नाम्नो यक्प्रत्ययोऽभ्युपगन्तुं न शक्यते, यक: कित्त्वादिति । यदि धातुभ्यो यक् न स्यात्तदा यकः कित्त्वमनर्थकं स्यात्, तद्धि धातोर्विहिते प्रत्यये गुणप्रतिषेधार्थं क्रियते, अत कित्त्वाद्धातोरेव 'यक्' इति स्थितम् ॥

**१. कण्डूग् इति** । कण्डूग् गात्रविकर्षणे । गित्वात् फलवति कर्त्तरि "ईगित" (३ ३ ९५) इत्यात्मनेपदम्, फलवत्कर्तृत्वाभावे तु "शेषात् परस्मै" (३. ३. १००) इति परस्मैपदम् । तथा व्यवस्थया, उभयपदमिति फलितम् । अत एवाभियुक्तोक्ति –"गैनोभयपदी प्रोक्त" इति । "अवयवे कृतं लिङ्गं समुदायस्यापि विशेषकम्, यं समुदायं सोऽवयवो न व्यभिचरति" इति

२. महीङ् । ३. हृणीङ् ॥ [ईदन्तौ २] ॥
४. वेङ् [एदन्तः] ५. लाङ् ॥ [आदन्तः] ॥

न्यायात् 'कण्डू' इत्यस्य गित्वेऽपि कण्डूय इत्यस्य गित्वात्, तत्फलं वेदितव्यम्, एवमन्यत्रापि अनुबन्धान्तरस्य समुदायार्थत्वम् । एतेन कण्डूय इति समुदायस्य गित्वाभावात् कथं तत्फलभाक्त्वमिति शङ्का निरस्ता । "धातोः कण्ड्वादेर्यक्" (३. ४. ८.) इति स्वार्थे यकि 'कण्डूयति कण्डूयते' इत्यादि । अत्र यकः कित्वाद् गुणाभाव । पूर्वाचार्यप्रसिद्ध्यनुरोधेनादावस्य पाठः ॥

अथ 'सूचिकटाह' न्यायेन, अल्पा आत्मनेपदिनो वाच्या, ते च चत्वारस्तत्राऽन्यादिक्रमेण द्वौ ईदन्तौ, तत एकारान्तः, ततो वर्णक्रमेण प्रथमपाठार्होऽपि, अर्थसाम्याल्लाघवार्थमादन्तः ।

**२. महीङ् इति** । महीङ् वृद्धौ पूजायां च । व्यस्तार्थनिर्देशः कैवल्यपूजार्थस्वीकृतः प्रतिबोधाय, यथा पूजायां तथा वृद्धावपि । अपलापोऽनुचित इत्यर्थः । 'महीङ् पूजायाम्' **इति माधवीयधातुवृत्तिः** । अत्र पूजा पूज्यमानकर्तृका, तेनाऽयमकर्मकः, महीयते पूजामधिगच्छतीत्यर्थः । यथा–"प्रेय स्वर्गे महीयते" **इति रामायणम्** । ङित्वाद् "इङितः कर्तरि" (३. ३. २२) इत्यात्मनेपदे, महीयते इत्यादि ॥

**३. हृणीङ् इति** । हृणीङ् रोषलज्जयो । ङित्वादात्मनेपदे हृणीयते इत्यादि ॥ **४ वेङ्. ५ लाङ् इति** । एतौ धौर्त्ये पूर्वभावे स्वप्ने च । ङित्वादात्मनेपदे वेयते लायते इत्यादि ॥

**६. मन्तु । ७. वल्गु । ८. असु ॥** [उदन्तास्त्रयः ३] **॥**
**९. वेट् । १०. लाट् ।** (वेट्लाटित्यन्ये) **॥ ११. लिट् । १२. लोट् ॥** [ टकारान्ताश्चत्वारः ॥४॥ ] **॥**

अथ पारिशेष्यात् परस्मैपदिनो वाच्याः, तत्रादौ त्रय उदन्ताः । **६ मन्तु इति** । मन्तु रोषवैमनस्ययोः । "शेषात् परस्मै" (३. ३. १००) इति परस्मैपदे "दीर्घश्च्वि०" (४. ३. १०८) इति दीर्घत्वे मन्तूयतीत्यादि । **चन्द्रस्तु**-जितं पठित्वा 'मन्तूयते' इत्यात्मनेपदमप्याह ॥

**७. वल्गु इति** । वल्गु माधुर्यपूजयोः । यकि दीर्घे वल्गूयतीत्यादि ॥

**८. असु इति** । असु मानस उपतापे । यकि दीर्घे असूयतीत्यादि । केचित् 'असूङ्' इति ङितं दीर्घान्तं च पठन्ति; असूयते इत्यात्मनेपदं चोदाहरन्ति । **सायणाचार्यस्तु**-'असु मनस्' एतावुपतापे, इत्याह । तन्मते, असूयति मनस्यतीति । **वर्धमान-हरदत्त-गणरत्नमहोदधिकारा**-आवनुसारेणासुरान्द्मसितिति सान्तं पठित्वा, असूञि दीर्घान्तमेके पठन्तीत्याहुस्तन्मते 'अस्यति असूयते' इति भवति । "न ह्यनसूयन् कुत्सयते" **इति श्रीशेषाहेः प्रयोगः ॥**

अथ टकारान्ताश्चत्वारः । **९ वेट् १० लाट् इति** । एतौ वेड्लाड्यौ । यथा 'वेड् लाड्' धौर्त्ये स्वप्ने च वर्तते तथा इमावपीत्यर्थः, लाघवार्थमेवं निर्देशः । वेट्यति लाट्यतीत्यादि । अत्र मतान्तरमाह-**वेट्लाटित्यन्ये** । केचित्तु 'वेट्लाट्' इत्येकमेव धातुं पठन्ति, तन्मते वेट्लाट्यतीत्यादि ॥ **११ लिट् इति** । लिट् अल्पार्थे कुत्सायां च । लिट्यतीत्यादि ॥ **१२ लोट् इति** । लोट् दीप्तौ । लोट्यतीत्यादि । **सायणाचार्यस्तु**, 'लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च' इत्याह ॥

**१३. उरस् । १४. उपस् । १५. इरस् । १६. तिरस् १७. इयस् १८. इमस् । १९. अस् । २०. पयस् २१. सम्भूयस् ।**

अथ सकारान्ता दश । **१३ उरस् इति** । उरस् ऐश्वर्ये । उरस्यति बलार्थे इति **सायणाचार्यः**, उरस्यति बलवान् भवतीत्यर्थ ॥ **१४ उपस् इति** । चिन्त्याऽर्थोऽयमिति श्रीहेमचन्द्रसूरीशा भगवन्त । 'उपस् प्रभातीभाव' इति **सायणाचार्यः**, उपस्यति रात्रि ॥ **१५ इरस् इति** । इरस् ईर्ष्यायाम् इरस्यतीत्यादि ॥ **१६ तिरस् इति** । तिरस् प्रसिद्धार्थे', अन्तार्द्धावित्यर्थ तिरस्यतीत्यादि ॥

**१७. इयस् १८. इमस् १९. अस् २० पयस् २१. सम्भूयस्** इति । एते चिन्त्यार्था इति श्रीहेमचन्द्रसूरीशा भगवन्त ॥

सायणाचार्यस्तु—

**१७. इयस् इति** । इयस् ऐश्वर्ये, अमुं **दुर्गो** न पठतीति **गणरत्नमहोदधौ** । इयस्यतीत्यादि ॥

१८. **इमस् इति** । एतत्स्थाने 'ईस्' इत्यपि पाठो दृश्यते । इमस्यति, ईस्यति, इत्यादि ॥

१९. **अस् इति** । ग्रन्थान्तरे नाऽयं दृश्यते । अस्यति ॥

२०. **पयस् इति** । पयस् प्रसृतौ । प्रसृति परिमाणविशेष । पयस्यतीत्यादि ॥

२१. **सम्भूयस् इति** । सम्भूयस् प्रभूतभावे, प्रचुरे इत्यर्थ । "प्रभूतं प्रचुरं प्राज्य-मदभ्रं बहुलं तथा" **इत्यमरः** । सम्भूयस्यतीत्यादि ॥

## २२. दुवस् ॥ [सकारान्ता दश-१०] ॥

## २३. इरज् । २४. भिषज् । २५. भिष्णज् ॥

[जकारान्तास्त्रयः-३] ॥

**२२. दुवस् इति ।** दुवस् परिताप-परिचरणयोः. दुवस्यतीत्यादि । सन्दीपनेऽपि केचित् । यच्छस्यम्-'समिधाग्निं दुवस्यत' इति । एतत्स्थाने **'द्रवस्'** इति केचित्, द्रवस्यतीत्यादि ॥

॥ इति सकारान्ता दश-१० ॥

**अथ जकारान्तास्त्रयः** —

**२३. इरज् इति ।** इरज् ईर्ष्यायाम् । इरज्यति । एतत्स्थाने 'इरञ् ईर्ष्यायाम्' **इति माधवीयधातुवृत्तिः** । तन्मते ईर्येति । अत्र **वर्धमान-हरदत्तौ-'इरस् इरज् इरञ्'** ईर्ष्यायामिति त्रीन् पेठतुः । इरस्यति, इरज्यति, ईर्येति।

'इरज्यन्नग्ने प्रथयस्व जन्तुभि' इत्यत्र भट्टभास्करादिभिर्दीप्त्यर्थोऽयमभिहितः ; तथा-'इरज्यन्ता वसव्यस्य भूमे' इत्यत्र ऐश्वर्यार्थे । ईर्येतिर्मार्गणमानार्थोऽपि, उक्तं च-ईर्यतिरीर्ष्योपाधिरिति क्षितिरिति ॥

**२४. भिषज् इति ।** भिषज् चिकित्सायाम् । भिषज्यतीत्यादि ॥

**२५. भिष्णज् इति ।** भिष्णज् उपसेवायाम् । भिष्णज्यतीत्यादि ॥

॥ इति जकारान्तास्त्रयः-३ ॥

**२६. रेखा। २७. लेखा। २८. एला। २९. वेला। ३०. केला। ३१. खेला। खेल इत्यन्ये। ३२. गोधा।**

अथ आदन्ता अष्टौ–

**२६. रेखा, २७ लेखा इति।** 'रेखालेखार्थौ चिन्त्यौ' इति श्रीहेमचन्द्रसूरीशा भगवन्तः। रेखा श्लाघाऽऽसादनयोः। आसादनं प्राप्तिः प्रापणा वा। रेखायति। 'श्लाघामनुभवति, अनुभावयति वा' **इति माधवीयधातुवृत्तिः॥**

**२७. लेखा इति।** लेखा स्खलने च। लेखायति। एतत्स्थाने **'लेख'** इत्यन्ये। तन्मते "अतः" (४. ३. ८२) इत्यल्लुकि लेख्यति॥

**२८. एला इति।** एला विलासार्थः। एलायति। अत्र **'इला'** इत्यपरे पठन्ति। तन्मते इलायति॥

**२९. वेला इति।** 'वेला चिन्त्यार्थः' इति श्रीहेमचन्द्रसूरीशा भगवन्तः। वेलायतीत्यादि॥

**३०. केला, ३१ खेला इति।** 'केलाखेलौ' एलावत्, विलास इत्यर्थः। केलायति, खेलायति इत्यादि। अत्र मतान्तरमाह–**' खेल इत्यन्ये '** इति। "अतः" (४. ३. ८२) इत्यल्लुकि खेल्यतीत्यादि॥

**३२. गोधा इति।** गोधा चिन्त्यार्थ इति श्रीहेमचन्द्रसूरीशा भगवन्तः। गोधायतीत्यादि॥

३३. मेधा ॥ [आदन्ता अष्टौ-८] ॥

३४. मगध । ३५. इरध । ३६. इषुध ॥

[धान्तास्त्रयः-३] ॥

३७. कुषुभ ॥ [भान्तः-१] ॥

---

**३३. मेधा इति ।** मेधा आशुग्रहणे । मेधायतीत्यादि ॥

॥ इत्यादन्ता अष्टौ-८ ॥

अथ धान्तास्त्रयः—

**३४. मगध इति ।** मगध परिवेष्टने । नीचदास्ये इत्येके । "अतः" (४. ३. ८२) इत्यल्लुकि मगध्यतीत्यादि ॥

**३५. इरध इति ।** अयं चिन्त्यार्थ इति श्रीहेमचन्द्रसूरीशा भगवन्तः । अत्रापि "अतः" इत्यल्लुकि, इरध्यतीत्यादि ॥

**३६. इषुध इति ।** इषुध शरधारणे । अल्लुकि, इषुध्यतीत्यादि ॥

॥ इति धान्तास्त्रयः-३ ॥

अथ भान्तः—

**३७. कुषुभ इति ।** कुषुभ क्षेपे । अल्लुकि कुषुभ्यतीत्यादि । एतत्स्थाने 'कुरुरु' इति क्रियारत्नसमुच्चये, एवं 'कुकुरु' इत्यपि पाठोऽन्यत्र दृश्यते । अत्र "दीर्घश्च्वि-यङ्-यक्-क्येषु च" (४. ३. १०८) इति दीर्घे कुरुरूयति, कुकुरूयतीत्यादि ॥

॥ इति भान्तः-१ ॥

३८. सुख । ३९. दुःख ॥ [खान्तौ-२] ॥

४०. अगद । ४१. गद्गद । 'गद्गदङ्' इत्येके ॥
[दान्तौ-२] ॥

---

अथ खान्तौ—

**३८. सुख, ३९ दुःख इति ।** सुख, दुःख, तत्क्रियायाम् । तच्छब्देन सुखदुःखार्थौ परामृश्येते । तेन सुखदुःखरूपायाः क्रियायामित्यर्थो भवति । "अतः" (४. ३. ८२) इत्यन्लुकि सुख्यति दुःख्यति, सुखमनुभवति दुःखमनुभवतीत्यर्थः ॥

॥ इति खान्तौ-२ ॥

अथ दान्तौ—

**४०. अगद इति ।** चिन्त्यार्थोऽयमिति श्रीहेमचन्द्रसूरीशा भगवन्तः । 'अगद नीरोगत्वे' इति माधवीया धातुवृत्तिः । **अमुं भोजो नेच्छतीति गणरत्नमहोदधौ** । अन्लुकि अगद्यतीत्यादि ॥

**४१. गद्गद इति ।** गद्गद वाक्यस्खलने । अन्लुकि गद्गद्यतीत्यादि । अत्र मतान्तरं दर्शयति-'**गद्गदङ् इत्येके**' इति । तन्मते गद्गद्यते इत्यादि ॥

॥ इति दान्तौ-२ ॥

**३८. सुख । ३९. दुःख ॥ [खान्तौ-२] ॥**

**४०. अगद । ४१. गद्गद । 'गद्गदङ्' इत्येके ॥ [दान्तौ-२] ॥**

---

अथ खान्तौ—

**३८. सुख, ३९ दुःख इति ।** सुख, दुःख, तत्क्रियायाम् । तच्छब्देन सुखदुःखार्थौ परामृश्येते । तेन सुखदुःखरूपायाः क्रियायामित्यर्थो भवति । "अतः" (४. ३. ८२) इत्यन्लुकि सुख्यति दुःख्यति, सुखमनुभवति दुःखमनुभवतीत्यर्थः ॥

॥ इति खान्तौ-२ ॥

अथ दान्तौ—

**४०. अगद इति ।** चिन्त्यार्थोऽयमिति श्रीहेमचन्द्रसूरीशा भगवन्तः । 'अगद नीरोगत्वे' इति माधवीया धातुवृत्तिः । अमुं भोजो नेच्छतीति गणरत्नमहोदधौ । अन्लुकि अगद्यतीत्यादि ॥

**४१. गद्गद इति ।** गद्गद वाक्यस्खलने । अन्लुकि गद्गद्यतीत्यादि । अत्र मतान्तरं दर्शयति-'गद्गदङ् इत्येके' इति । तन्मते गद्गद्यते इत्यादि ॥

॥ इति दान्तौ-२ ॥

**४२. तरण । ४३. चरण । ४४. उरण । ४५. तुरण । ४६. पुरण । ४७. भुरण । ४८. चुरण ।**

अथ णान्ता अष्टौ—

**४२. तरण इति** । तरण प्रसिद्धार्थः । गताविति **माधवीयधातुवृत्तिः** । अन्लुकि तरण्यतीत्यादि ॥

**४३. चरण इति** । चरण गतौ । एतत्स्थाने–**'वरण' इति भोजः** । **इति माधवीयधातुवृत्तिः** । तयोरुदाहरणं काव्ये–'वरणाश्चारण्यैर्वेलाम्' **'भरण' इति तु क्रियारत्नसमुच्चये** । अन्लुकि 'चरण्यति, वरण्यति, भरण्यति' इति ॥

**४४. उरण इति** । चिन्त्यार्थोऽमिति श्रीहेमचन्द्रसूरीशा भगवन्तः । अन्लुकि, उरण्यतीत्यादि ॥

**४५. तुरण इति** । तुरण त्वरायाम् । अन्लुकि तुरण्यतीत्यादि ॥

**४६. पुरण इति** । पुरण गतौ । अन्लुकि पुरण्यतीत्यादि ॥

**४७. भुरण इति** । भुरण धारण-पोषण-युद्धेषु । 'भुरण धारणपोषणयोः, पणधारणयोरित्यन्ये' **इति माधवीया धातुवृत्तिः** । अन्लुकि भुरण्यतीत्यादि ॥

**४८. चुरण इति** । चुरण मतिचौर्ययोः । 'चौर्ये एव' **इति माधवीया धातुवृत्तिः** । अन्लुकि चुरण्यतीत्यादि ॥

४९. भरण ॥ [णान्ता अष्टौ–८] ॥

५०. तन्तस, ५१. पम्पस ॥ [सान्तौ द्वौ–२] ॥

५२. अरर । ५३. समर । ५४. सपर ॥ [रान्तास्त्रयः–३] ॥

॥ इति कण्ड्वादिः ॥छ॥ श्रीः ॥छ॥ श्रीः ॥छ॥

---

४९. भरण इति । भरण प्रसिद्धार्थः । अल्लुकि भरण्यतीत्यादि ॥

॥ इति णान्ता अष्टौ–८ ॥

अथ सान्तौ—

५०. तन्तस, ५१ पम्पस इति । एतौ दुःखार्थौ । एतत्स्थाने–**'तन्तस् पम्पस्'** इत्यपि पाठो दृश्यते । तन्तस्यति, पम्पस्यति । अदन्तत्वे तु अल्लोपो विज्ञेयः ॥ ॥ इति सान्तौ–२ ॥

अथ रान्तास्त्रयः—

५२. अरर इति । अरर आराकर्मणि । आरा प्रतोदा । अल्लुकि, अरर्यतीत्यादि ॥

५३. समर इति । समर युद्धे । अल्लुकि समर्यतीत्यादि ॥

५४. सपर इति । सपर पूजायाम् । अल्लुकि सपर्यतीत्यादि ॥

॥ इति रान्तास्त्रयः ॥

कण्ड्वादेराकृतिगणत्वात् धनादीनामपि सद्ग्रहस्तेन धनायतीत्यादि ॥

अत्र क्रियारत्नसमुच्चयः—

क्ये, कण्डूय्यते ॥ अद्यतन्याम्—अकण्डूयीत्; अकण्डूयीष्ट । "अतः"
(४. ३. ८२) इत्यल्लुकि "योऽशिति" (४. ३. ८०) इति यलुकि, अभिष-
जीत् । अकण्डूयि । अभिषजि । अत्राल्लुकः स्थानित्वान्न वृद्धिः । कण्डूयाञ्चकार,
कण्डूयाञ्चक्रे वा । भिषजांचकार । कण्डूयिता । भिषजिता । "क्योवा"
(४. ३. ८१) इत्यत्र यकोऽपि लुगित्यन्ये । भिषजिता; भिषज्यिता ।
"कण्ड्वादेस्तृतीय." (४. १. ९) इति तृतीयस्य द्वित्वे; कण्डूयियिषति,
कण्डूयियिषते । असूयियिषति । णिगि, कण्डूययति, । ङे, अकण्डूययत् । अत्र
"अतः" (४. ३. ८२) इत्यनेन विषयेऽप्यकारलोपात् "स्वरस्य०" (७.
४. ११०) इति स्थानित्वाभावात्, 'यि' इत्यस्य द्वित्वम्, न तु 'य' इत्यस्य ।
एवमासूयियत् । कण्डूयित्वा । कण्डूयिता । कण्डूयितुम् ॥ इति कण्ड्वादिः ॥१॥

इति श्रीतपोगच्छाम्बराम्बरमणि–श्वेताम्बरशिरोमणि–शासनसम्राट्–क्षमापालावलि-
पूजितपादपद्म–प्रौढप्रतापि–श्रीकदम्बगिरिप्रमुखानेकतीर्थोद्धारक–सूरिचक्रचक्र-
वर्ति सर्वतन्त्रस्वतन्त्र–जगद्गुरु–भट्टारकाचार्य–श्रीमद्विजयनेमिसूरीश्वर-
पट्टालंकार–व्याकरणवाचस्पति–कविरत्न–शास्त्रविशारद–विबुधशिरोमणि-
भट्टारकाचार्य–श्रीमद्विजयलावण्यसूरीश्वर–विनेयमुनि–
दक्षविजयविरचितः कण्ड्वादिप्रकाशः समाप्तः ॥



## श्रीहैमधातुपारायणस्य शुद्धिपत्रकम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| वृत्त | वृत्ते | ४ | ३ |
| नाचै | नीचै | ७ | ४ |
| एव | एवं | १५ | १५ |
| अवयेव | अवयवे | १६ | १६ |
| वृह | वृह् | २३ | ११ |
| अर्घो | अर्घो | २३ | १७ |
| लौल्य | लौल्यं | २६ | २० |
| दनयाः | दनयोः | ३० | ६ |
| आडः | आडः | ३६ | ५ |
| गर्दि | गार्हि | ३६ | ८ |
| शाक्ष्यं | शैक्ष्यं | ३७ | १२ |
| मेदग | मेदग् | ३९ | १० |
| घतादिः | घुतादिः | ४२ | १३ |
| मक्लैव्ये | वैक्लव्ये | ४३ | २० |
| भूवि | भुवि | ५१ | १ |
| इंकू | इंङ्क् | ५१ | ८ |
| पृचह् | पृचैह् | ५१ | २० |
| मशिक् | वसिक् | ५२ | ४ |
| धान्ता | धान्ताः | ५६ | २ |
| निंष्पत्ति. | निंष्पत्तिः | ५७ | १५ |
| पुष्पा | पुष्या | ५८ | १६ |
| शमूच् | शमू | ५९ | ८ |
| ह्रीह्च् | ह्रीह्च् | ६० | ५ |
| असौ | असू | ६० | ८ |
| पुष्पादित्वं | पुष्यादित्वं | ६० | ११ |
| सूर्यस्यादि | सूयत्यादि | ६० | १२ |
| [illegible] | [illegible] | ६१ | १ |
| ,, | ,, | ,, | ११ |
| शिगृट् | शिगृट् | ६४ | ३ |
| ओम | ओम | ६७ | १६ |
| ह्फत् | ह्म्फत् | ६९ | ५ |
| गुंफत् | गुम्फत् | ६९ | ५ |
| उभत् | उम्भत् | ६९ | ७ |
| शुंभत् | शुम्भत् | ६९ | ७ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| रिंशत् | रिशंत् | ७० | ६ |
| विंशत् | विशंत् | ७० | ७ |
| छेदन | छेदने | ७१ | १४ |
| धूंड्त् | धृहृत् | ७२ | ४ |
| स्मृताः | स्मृता | ७२ | १० |
| ऋल्वादे० | ऋल्वादे० | ७६ | १८ |
| पश् | पृश् | ७७ | ७ |
| जश् | जृश् | ,, | ९ |
| ऋश् | ऋश् | ,, | १० |
| बाधने | बोधने | ,, | १२ |
| चूस | मूस | ८७ | १ |
| मित्येके | यमित्येके | ,, | ८ |
| श्लिषण | श्लिषण् | ,, | १३ |
| ष्णिह | ष्णिहण् | ८८ | १ |
| म्रक्ष यति | म्रक्षयति | ,, | १२ |
| तोरण | तोपण | ८९ | ७ |
| घट च। अयं घाल्कुटस्यर्थे चुरादिः, घाटयति। | घट च | ९१ | ६ |
| कणण | कणण् | ९१ | ८ |
| मुदण | मुदण् | ९२ | १५ |
| तसुण् | तसु | ९४ | १० |
| युक् | युक् | ९७ | ८ |
| विदिप | विदिप् | ९७ | १८ |
| चेतते | चेतति | ९९ | ११ |
| पाक्रव | प्राक्रव | १०० | ११ |
| [illegible] | [illegible] | [illegible] | १९ |
| ध्यानयति | दर्शनयति | १०४ | १९ |
| मिश्रण | मिश्रण् | १०५ | १९ |
| दारण | दारण् | ,, | २१ |
| वासण | वासण् | १०८ | १० |
| अचिण | अर्चिण् | ११० | ११ |
| वरिभः | परिभि | ११३ | १४ |

# श्रीहैमधातुपारायणस्य शुद्धिपत्रकम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|---|---|---|
| वृत्त् | वृत्ते | ४ | ३ | रिंशत् | रिशंत् | ७० | ६ |
| नाचै | नीचै | ७ | ४ | विंशत् | विशत् | ७० | ७ |
| एव | एवं | १५ | १५ | छेदन | छेदने | ७१ | १४ |
| अवयेव | अवयवे | १६ | १६ | धृंहत् | धृहत् | ७२ | ४ |
| वृह् | वृह् | २३ | ११ | स्मृताः | स्मृता | ७२ | १० |
| अर्धो | अर्घो | २३ | १७ | ऋस्वादे० | ऋत्वादे० | ७६ | १८ |
| लौल्य | लौल्यं | २६ | २० | पश् | पृश् | ७७ | ७ |
| दनयाः | दनयोः | ३० | ६ | जश् | जृश् | ,, | ९ |
| आहः | आहः | ३६ | ५ | झश् | झृश् | ,, | १० |
| गर्दि | गार्हि | ३६ | ८ | बाधने | बोधने | ,, | १२ |
| दाक्ष्यं | दौक्ष्यं | ३७ | १२ | वूम | वृस | ८७ | ६ |
| मेहग | मेहग् | ३९ | १० | मिस्येके | यमिस्येके | ,, | ८ |
| धतादिः | धुतादिः | ४२ | १३ | क्षिपण | क्षिपण् | ,, | १३ |
| वक्लैव्ये | वैक्लव्ये | ४३ | २० | ष्णिणह् | ष्णिहण् | ८८ | १ |
| भूवि | भुवि | ५१ | ६ | म्रक्ष यति | म्रक्षयति | ,, | १२ |
| हुंकू | हुंडुक् | ५१ | ८ | तोरण | तोपण | ८९ | ७ |
| पृचङ् | पृचैङ् | ५१ | २० | घट च। अयं घास्फुटत्यर्थे चुरादि., घाटयति। | घट च | ९१ | ६ |
| वशिक् | वसिक् | ५२ | ४ | कणग | कणण् | ९१ | ८ |
| भान्ता | धान्ताः | ५६ | २ | मुदण | मुदण् | ९२ | १५ |
| निंष्पत्ति. | निष्पत्तिः | ५७ | १५ | ससुण् | वसु | ९४ | १० |
| पुष्पा | पुष्या | ५८ | १६ | युक् | युक् | ९७ | ८ |
| शमूच् | शमू | ५९ | ८ | 'विंदिप | विदिप् | ९७ | १८ |
| डीहृच् | डीङ्च् | ६० | ५ | चेतते | चेतति | ९९ | १३ |
| असौ | असू | ६० | ८ | पाकव | प्राकव | १०९ | १२ |
| पुष्पादिस्वं | पुष्यादिस्वं | ६० | ११ | ध्वनति | [illegible] | १०४ | १९ |
| सूर्यत्यादि | सुयत्यादि | ६० | १२ | ध्यानयति | ध्वानयति | १०४ | १९ |
| पीहुच् | पींहुच् | ६१ | १ | भिक्षण | भिक्षण् | १०५ | १९ |
| ,, | ,, | ,, | ११ | शारण | शारण् | ,, | २१ |
| शिगट् | शिंगट् | ६४ | ३ | वासण | वासण् | १०७ | १० |
| औम | ओम | ६७ | १६ | अचिण | अचिण् | ११० | ११ |
| इफत् | इम्फत् | ६९ | ५ | पद्भिम. | पद्भि | ११३ | २४ |
| गुंफत् | गुम्फत् | ६९ | ५ | | | | |
| उभत् | उम्भत् | ६९ | ७ | | | | |
| शुभत् | शुम्भत् | ६९ | ७ | | | | |

